प्रतिरूपपत्रमेवं तत्समर्पितैतद्विवादविषयनिविष्टपत्रजातमेतद्धर्म्माधिकरणार्थिनां निवेदनपत्रमेतदब्दीयसितम्बरमासीयषष्ठदिवसीयैतद्धर्म्माधिकरणीयविचारपत्रं च यदेतदब्दीयनवम्बरमासीयषष्ठदिनसम्बन्धिसोमवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते ।––

प्रभुसमर्पितोपरिलिखितपत्रजातदृष्ट्या अस्मद्दत्तैतद्विवादविषयनिविष्टपूर्वव्यवस्थायाः किञ्चिदपि परावर्त्तनस्यावश्यकता नास्ति, धर्मशास्त्रे केनापि मुनिना ग्रन्थकारेण वा जीवति धनस्वामिनि पितरि तत्स्वत्वास्पदीभूतं धनं यत् स्वपित्रादिमरणानन्तरं उत्तराधिकारित्वेन पित्रा प्राप्तं तद्धनं तत्पुत्रैर्विभज्य ग्रहीतव्यमित्यस्यालिखितत्वात्, कस्मिंश्चिदपि देशे तादृशव्यवहाराभावाच्च । यच्च एतद्धर्म्माधिकरणार्थिभिः स्वकीयनिवेदनपत्रे अस्मद्दत्तपूर्वव्यवस्थायां पैतामहधनं लिखितं तत्प्रमाणेषु पैतृकं धनं लिखितमिति विरोधो लिखितस्सन् (?) सम्यक्तद्व्यवस्थालिखितानां षण्णां प्रमाणानां मध्ये केवलं प्रथमप्रमाणे मनुवचने एव पैतृकं धनमिति लिखितमस्ति । तत्र पैतृकं धनमित्यस्य पितृस्वत्वास्पदीभूतं धनमित्याशयः । तत्र पितृस्वत्वास्पदीभूतं धनं यद्धनं पित्रा स्वेनैवोपार्जितं तदापि भवति । यद्धनं पित्रा स्वपित्रादिमरणानन्तरं स्वमात्रादिमरणानन्तरं वोत्तराधिकारित्वेन प्राप्तं तदपि भवत्येव, पितृस्वत्वस्य तत्राप्यक्षतत्वात् । यथैतद्धर्म्माधिकरणार्थिभिर्विवादास्पदीभूतं धनं स्वपैतामहमिति लिखितं तत्रापि तद्धनमर्थिनां पितामहस्य स्वोपार्जितं न भवति, किन्त्वर्थिनामेतद्धर्म्माधिकरणीयनिवेदनपत्रेणैव विवादास्पदीभूतं धनं तत्पितामहेनाप्युत्तराधिकारित्वेनैव प्राप्तमित्यस्य स्पष्टीकृतत्वेन, अतएव यद्धनमर्थिनां पितामहेनार्थात् कीर्त्तिसिंहेन मूलभूतधनस्वामिनो विक्रमादित्यरायात् सप्तमपुरुषेणोत्तराधिकारित्वेन प्राप्तं तद्धनं यद्यर्थिनां पैतामहं भवति तदा तद्धनमर्थिनां पित्रा अर्थाद्गरिधनसिंहेन मूलभूतधनस्वामिनो विक्रमादित्यरायादष्टमपुरुषेणोत्तराधिकारित्वेन प्राप्तं तद्धनमप्यर्थिनां पैतृकमपि भवितुं शक्नोत्येव । इतरेषु तद्व्यवस्थालिखितेषु पञ्चसु प्रमाणेषु सामान्यतो धनमित्यस्य लिखितत्वेन पितुः स्वोपार्जिते क्रमागते च धनशब्दस्याविशेषात्–इति कानपुरप्रदेशचलितमनुमिताक्षरावीरमित्रोदयव्यवहारमाधवव्यवहारकौस्तुभव्यवहारमयूखमिताक्षराटीकादिग्रन्थानुसारेणोत्तरमिति ॥

एतदब्दीयदिशम्बरमासीयोनविंशतितमदिनसम्बन्धिबुधवासरे मयेदमुत्त-
रं दत्तमिति ॥

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

---

# श्रीदुर्गा

१७—रोवकारी मिछिल मोकाम कलिकातार सदर देओयानि आदालतेर हाकिम श्रीयुत आलकसुन्दर रास साहेवेर बैठके हओयार तारिख इङ्गरेजी सन १८३२ सालेर ४ डिजम्बर मोताबेक सन १२३९ वाङ्गलार २० अग्रहायन मङ्गलवार--

आनन्दकिशोर गुप्त वनाम श्रीमती क्षेमङ्करीदासी

छायलेर उकिल मुनशी गोलाम वतुल हाजीर आइल। छायलेर छओयाल ३२ टाका मूल्ल्येर इष्टाम्प कागजेर पर ग्रासाच्छादन प्रभृति विशये मुः ५२० पाच शत कुडी टाकार मोकद्दमार खास आपील मञ्जुरेर प्रार्थनाय उकिल मजकुरेर नामेर एक केता ओकालतनामा ओ इं० सन १८३० सालेर २१ अक्तुवर तारिखेर हओया नदिया जेलार आदालतेर एक केता फयसलार नकल ओ इं० सन १८३२ सालेर १५ फिवरेल ओ सन १८२७ सालेर १८ आपरेल तारिखेर हओया कलिकातार क्रोट आपीलेर दुइ केता फयशलार नकल ओ एक केता वेवस्था सहित, ये सन हालेर ८ शेतम्वर तारिखे दाखिल हइयाछिल, अद्य दृष्टे आइल। येहेतु हुकुम हओनेर पूर्व्व शास्त्रेर विवरण ज्ञात हओया उचित वोध हइल, एजन्य हुकुम हइल ये एइ रोवकारिर नकल एइ हुकुमे ए आदालतेर पण्डितके अर्पन कराजाय ये निचेर लिखित प्रश्नोत्तर ताहार पाइवार दिवसावधि एक सप्ताह मध्ये दाखिल करेण इति।

प्रश्न —खोशालचन्द्रराय तालुकात प्रभृति ओ करुणामयी वनिता ओ करुणामयीर गर्भजात दुहिता श्रीमति चित्रादासीके उत्तराधिकारिगणके राखिया लोकान्तर्गामी हय, ततूपरे लिखित श्रीमती करुणामयी स्वामीर तेज्य वस्तुर पर ओ ताहार मृत्युर पर तस्य कन्या श्रीमती चित्रादासी उक्त खोशालचन्द्रेर तेज्य वस्तुर उपर दखिलकार हइलेन। तदपरे उक्त श्रीमती चित्रादासीर दुइ पुत्र अर्थात् भैरवचन्द्रगुप्त ओ आनन्दकिशोरगुप्तेर मध्ये

ज्येष्ठ भैरवचन्द्र गुप्त श्रीमती क्षेमङ्करीदासी वनिता ओ हरसुन्दरी ओ दयामयी प्रभृति चारि कन्याके राखिया आपन माता श्रीमती चित्रादासीर समक्षे लोकान्तर हय, एवं उक्त श्रीमती चित्रादासीर द्वितीय पुत्र आनन्दकिशोर गुप्त उक्त खोशालचन्द्रेर तावत तेज्य वस्तुर उपर दखिलकार हय। अतः पर जिज्ञाशा करा जाइतेछे ये यदि उक्त आनन्दकिशोर आपन ज्येष्ठ भ्राता भैरवचन्द्रेर स्त्री श्रीमती क्षेमङ्करी दासीके, ओ ऐ श्रीमती क्षेमङ्करीदासीर मृत्युर पर ताहार कन्यागण हरसुन्दरी ओ दयामयी प्रभृतिके ताहार दिगेर आविश्वक अनुसारे ग्रासाच्छादन ना देय, तबे बङ्गदेशीय चलित शास्त्रानुसारे लिखित श्रीमती क्षेमङ्करीदासी ओ तत् परलोकान्तर तस्य कन्यागण श्रीमती हरसुन्दरी ओ दयामयी प्रभृति छाएल आनन्दकीशोर गुप्तेर स्थाने ग्रासाच्छादन पाइवार क्षेमता राखे कि ना—

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतअलकसुन्दरसाहेबधर्म्माधिकरणलिखिताङ्गरेजीशब्दप्रतिपाद्यद्वात्रिंशदधिकाष्टादशशताब्दीयदिशम्बरमासीयचतुर्थदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयतन्मासीयपञ्चदशदिनसम्बन्धिशनिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रभुसमर्पितप्रश्नपत्रलिखितवृत्तान्ते सत्यानन्दकिशोरगुप्तो यद्युत्तराधिकारित्वेन प्राप्तपितृधनायां स्वमातरि जीवन्त्यां मातामहधने अनुत्पन्नस्वत्वस्य मृतस्य भैरवचन्द्रस्य स्वकीयज्येष्ठभ्रातुः पत्न्याः श्रीमत्याः क्षेमङ्करीदास्याः; तन्मरणोत्तरं तत्कन्यानां हरसुन्दरीदयामयीप्रभृतीनामावश्यकग्रासाच्छादनं न ददाति तदा सा एव श्रीमतीक्षेमङ्करीदासी ग्रासाच्छादनोपयुक्तस्वपतित्यक्तधनाभावे स्वजीवनपर्य्यन्तमानन्दकिशोरगुप्तस्य स्वकीयदेवरस्य स्थाने ग्रासाच्छादनग्रहणस्य क्षमतां रक्षत्येव, एवं तन्मरणोत्तरं तत्कन्यकानां यदि विवाहो नाभूत्तदा तासां मध्ये अविवाहितास्सर्वा एव

विवाहपर्य्यन्तं ग्रासाच्छादनोपयुक्तस्वपितृत्यक्तधनाभावे सति विवाहपर्य्यन्तं ग्रासाच्छादनग्रहणस्य क्षमतामानन्दकिशोरगुप्तस्य स्थाने रक्षन्त्येव । यदि च भैरवचन्द्रस्य कन्यानां सर्व्वासामेव विवाहो जातः स्यात् तदा तासां विवाहितानां कन्यकानां मध्ये यासां ग्रासाच्छादनं स्वभर्त्तृकुलात् स्वभर्त्तृकुलसम्बन्धिधनाद् वा स्वपितृत्यक्तधनाद्वा भवितुं न शक्नोति तदा ता अपि यावज्जीवं स्वकुलोचितग्रासाच्छादनग्रहणस्य क्षमतामानन्दकिशोरगुप्तस्य स्वपितृव्यस्य स्थाने रक्षन्त्येव । यासाञ्च विवाहितानां ग्रासाच्छादनं स्वभर्त्तृकुलात् स्वभर्त्तृकुलसम्बन्धिधनाद् वा स्वपितृत्यक्तधनाद् वा भवितुं शक्नोति ताश्च ग्रासाच्छादनग्रहणस्य क्षमतामानन्दकिशोरगुप्तस्य स्थाने न रक्षन्ति, तासामावश्यकग्रासाच्छादनस्य स्वभर्तृकुलादेरुपपत्तेः—इति वङ्गदेशचलित-दायभाग-दायतत्त्वदायभागटीका-दायक्रमसंग्रह-विवादार्णवसेतु-विवादभङ्गार्णवादिग्रन्थानुसारिणी व्यवस्था—

अत्र प्रमाणम्—

*सुताश्चैषाञ्च भर्त्तव्या यावद्वै भर्त्तृसात्कृताः ।*
*अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः ॥* इति दायभागादि( दाभा० पृ० १०४ )ग्रन्थधृतयाज्ञवल्क्य( पृ० २२७ २।१४१ )वचनम् ॥१॥

*मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः ।*
*विनियोगार्थरक्षासु भरणे च स ईश्वरः ॥*
*परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये ।*
*तत् सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥*—इति दायभागादि-(दाभा० पृ० १७३)ग्रन्थधृतनारद(नास्मृ० १३।२८-२६)वचनञ्चेति ॥२॥

अङ्गरेजीशब्दप्रतिपाद्यत्रयस्त्रिंशदधिकाष्टादशशताब्दीयजानवरीमासीयाष्टमदिनसम्बन्धिमङ्गलवासरे मयेयं व्यवस्था दत्तेति—

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

—————

४७०२ ल० ।

१८ फैरादि—गोलकमणीदासी सा० वेहाला परगणे वलिया आसामी —पीताम्वरहालदार १स्वयं देओया १सा० वेहाला परगणे वलिया, निमचाँद राय, १सा० मोदि परगणे मागुरा ।

मालिके जमीन सावेक ँरामचन्द्रहालदारेर ओयारिस श्रीनाथहालदारभट्टाचार्य । इहार हाल खरिदार हरचन्द्र हालदार सा० वेहाला परगणे वालिया १, दोसरा मालिके जमिन महाराजा ँनवकृष्णवाहादुरेर ओयारिस लायेक शिव-कृष्णवाहादुर ओ कालीकृष्णवाहादुर सा० सहर कलिकातार सवावाजार २ ।

दावि मौरसि जमिर लाखेराजी जमीर ओयारिसिते दखल कायेम हइवार प्रार्थनाय किम्मत तायदाद १५० टाका । एक वेक्ति गङ्गारामराय जाति छत्रि आपन सजातीते विवाह करे। विवाहिता स्त्रीर पक्षे एक पुत्र मदनराय । ऐ गङ्गारामराय एक-कपालिर कन्याके आसना करे । ताहार उदरे एक कन्या हय। ताहार नाम गोलकमणि । ताहाके छत्रिर संगे विवाह देय। गङ्गारामराय लोकान्त हइवाते ऐ मदनराय आपन पितार स्थावर ओ अस्थावर विषय दखलिकार थाकिया सजातिते विवाह करे, एक कन्या हय । तस्य नाम वरदामणि । ऐ मदन-राय आपन पैतृक जे किछु तावत आपन कन्या वरदामणिके दान करे, सरत् एइ जे पर्य्यन्त वरदामणिर विमाता जीवितमान थाकिवेक ऐ विषयेर ॥=) आना रकम उपस्वत्व हइते खोरपोष करिवेक, वरदार ।=) आना थाकिवेक, वरदार विमातार लोकान्त हइले सोलो आना उपस्वत्त्व वरदार थाकिवेक । ऐ वरदार विमाता ऐ प्रकार दखलिकारि थाकिया आपन सपतिनि-पुत्री वरदामनिके सजातीते विवाह दिया फौत करे । वरदामनि आपन विमातार श्राद्ध आदि करिया ऐ दानेर विशयेते दखलिकारि थाकिया किछु काल परे वरदामनि आपन स्वामिके राखिया लोकान्त

हइयाछे। एक्षन ऐ गोलकमनि आपन पितार गङ्गारामरायेर ओयारिस जानाइया नालिस करे। अतएव धर्मशास्त्र अनुसारे ए विषय काहारे घटीवेक इति—

## श्रीर्जयतितराम्

प्रभुसमर्पितप्रश्नपत्रं यदङ्गरेजीशब्दप्रतिपाद्यद्वात्रिंशदधिकाष्टादशशताब्दीयागस्तिमासीयत्रयोविंशतितमदिनसम्बन्धिवृहस्पतिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

अत्र यद्यपि प्रश्नपत्रे लिखितमस्ति मदनरायस्य कन्या वरदामणी स्वविमातुः श्राद्धादिकं कृत्वा तद्दानकृतधने आयत्तत्वं सम्पाद्य किञ्चित्-कालानन्तरं स्वपतिं रक्षित्वा मृतेति, परन्तु वरदामण्या विमाता प्रश्नपत्र-लिखितानां स्त्रीणां मध्ये का भवतीति प्रश्नपत्रेण ज्ञातुं न शक्यते; तथापि प्रश्नपत्रलिखितवृत्तान्तस्य सत्यत्वञ्चेत् तदा वरदामण्याः यदि कन्यापुत्र-दौहित्रपौत्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्रभ्रातृमातृपितृपर्य्यन्तानां मध्ये कश्चिन्ना-स्ति चेत्तदा तत्पत्युरेवाधिकारः। प्रश्नपत्रलिखितवृत्तान्ते सति विवादास्प-दीभूतधनस्य वरदामण्याः कन्यावस्थायां पितृदत्तत्वेन सौदायिकस्त्रीधनत्वात् कन्यावस्थायां पितृदत्तसौदायिकस्त्रीधने च कन्यामारभ्य पितृपर्य्यन्तानामुपरि-लिखितानामभावे पत्युरधिकारस्यार्थसिद्धत्वात्—इति वङ्गदेशचलितदाय-भागदायतत्त्व-दायभागटीका-दायक्रमसंग्रह विवादार्णवसेतु-विवादभङ्गार्णवादि-ग्रन्थानुसारिणी व्यवस्था—

अत्र प्रमाणम्—

*ऊढया कन्यया वापि पत्युः पितृगृहेऽथवा।*
*भर्त्तुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम्॥*—इति दायभागादि( दाभा० पृ० ७६ )ग्रन्थधृतकात्यायन( कास्मृ० ९०१। पृ० १०६ ) वचनम्॥१॥

*विवाहकाले तत्पूर्वापरकाले वा स्त्रियै यद्धनं पित्रा दत्तं तत्र तु धने प्रथमं कुमार्य्यास्तदनन्तरमूढायाः पुत्रवतीसम्भावितपुत्रयोस्तदनन्तरं च वन्ध्याविधवयोश्चाधिकारः। सर्व्वदुहित्रभावे पुत्रादेर्यौतुकधनवत् क्रमेण-*

धिकारः—इति दायक्रमसंग्रह( पृ० २३ )विवादार्णवसेत्वादि( पृ० ५७ ) ग्रन्थलिखनम् ॥२॥

तत्र यौतुकधने इति प्रस्तुत्य सर्व्वदुहित्रभावे पुत्रस्याधिकार इति। पुत्राभावे दौहित्रोऽधिकारीति। दौहित्राभावे पौत्रस्तदभावे प्रपौत्र इति। तदभावे सपत्नीपुत्र इति। तदभावे सपत्नीपौत्रस्तदभावे सपत्नीप्रपौत्र इति। एतत्पर्य्यन्ताभावे ब्राह्मदैवार्षगान्धर्वप्राजापत्याख्यविवाहपञ्चकलब्धयौतुकधने भर्त्तुरधिकारः—इति दायक्रमसंग्रह( पृ० १९।२० )ग्रन्थलिखनम् ॥३॥

बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च।
अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः॥—इति दायभाग( पृ० ९२ )दायक्रमसंग्रह( पृ० २० )विवादार्णवसेतु( पृ० ६० )विवादभङ्गार्णवादि( २ विवा० ४१५ क )ग्रन्थधृतयाज्ञवल्क्य( २।१४५ )वचनम् ॥४॥

बन्धुदत्तमिति मातापितृभ्यां यद्दत्तम्, अतएव तत्पुत्राश्च भ्रातर[1] एव बान्धवाः तदाह वृद्धकात्यायनः—

पितृभ्याञ्चैव यद्दत्तं दुहितुः स्थावरं धनम्।
अप्रजायामतीतायां भ्रातृगामि तु सर्वदा॥ इति

सर्व्वदापदेन ब्राह्मादिपैशाचान्तविवाहिताया अप्रजाया[2] धनं भ्रातृगाम्येव भवतीति। स्थावरपदाद् दण्डापूपन्यायादेवापरस्य धनस्य सिद्धिः। बन्धुदत्तपदेन कन्यादशायां यत् पितृभ्यां दत्तं तदुच्यते—इति दायभाग( पृ० ९२ )ग्रन्थलिखनम् ॥५॥

प्रथमं सोदराणां तदभावे मातुः मातुरभावे पितुः एषां पुनरभावे तद्धनं भर्त्तुः—इति दायभाग(पृ० ९५ )ग्रन्थलिखनञ्चेति ॥६॥

अङ्गरेजीशब्दप्रतिपाद्यत्रयस्त्रिंशदधिकाष्टादशशताब्दीयजानवरीयमासीयचतुर्द्दशदिनसम्बन्धिसोमवासरे मयेयं व्यवस्था दत्तेति—

श्रीर्जयतितराम्
श्रीवैद्यनाथमिश्रेण

———

१. भ्रातरो बान्धवाः—दाभा०।　　२. अप्रजसो धनं—दाभा०।

३३४१ नं

१९—रोवकारी मिछिल शदर देओयानि आदालत मो॰ कलिकाता आदालत मजकुरेर हाकिम श्रीयुत रिचार्ड ओयालपोल साहेवेर वैठके। तारिक ९ माह जानेर इं सन १८३३ साल मोता-वके वाङ्गला २७ माह पौष १२३९ साल दिवस बुधवार—

मोछम्मात लक्ष्मीप्रिया आपीलाण्ट

भैरवचन्द्रचौधुरि ओ जयचन्द्रचौधुरि, रेष्पाडेण्टान

आपिलण्टेर उकिल मनसिं होसन आलि ओ हाजिर रेष्पा-डेण्टर उकिल सदासुकपण्डित हाजिर आइल, आर द्वितीय रेष्पाडेण्ट जयचन्द्रराय इयानामनामा ओ इस्ताहारनामा जारिते ओ खोद किम्वा उकिलेर द्वाराय हाजिर नाइ। एइ मकर्द्दमा गतो नवम्वर मासेर २९ तारिखे आमार वैठके रोवकार हइया नालिसि आरजि प्रभृति कागजात् नां प्रिविन्सियाल कोर्टेर फयछला पर्य्यन्त ओ ए आदालतेर कागज-पत्र पडा हइया आपीलण्टेर उकिलेर उक्त उदाहरण सेरेस्ता हइते वाहिर करनेर हुकुम छादेर हइया मुलतवि छिल, अद्य करुणामयी ओ गएरह आपीलण्टान ओ जयचन्द्रघोष ओ गएरह रेष्पाडेण्टान ३०२६ लम्वरेर मोकर्द्द-मार कागजपत्र आर कमलाकान्त राय ओ गएरह वनाम गङ्गा-चरणसेन खास आपीलेर दरखास्त ओ ताहार सम्पर्कीय कागज-पत्रेर सहित आमार वैठके दरपेष इइया एइ दुइ मकर्द्दमार कोन-कोन कागज विशेषत एइ आदालतेर पण्डितेर व्यवस्था सकल प्रगाढ दृष्टे दृष्टी करा ओ पडा गेल। एवं एइ आदालतेर सन १८२७ सालेर २० ओ २८ नवम्वर तारिखेर लिखित दुइ केत्ता रोवकारि ओ व्यवस्था एइ आदालतेर पण्डितेर कालीप्रसाद-राय छापलेर मोकर्द्दमार ओ जे रेष्पाडेण्टर उकिल दुइ २ टाका किम्मतेर फेरस्त तिन केतार द्वाराय दाखिल करिलेक, ताहा पडा-गेल। ततपरे आपिलण्टेर उकिलके जिज्ञाशा गेल ये पूर्णिमार पुत्र ब्रजनाथ कोन वतसरे, कि जयदुर्गार वर्त्तमाने, कि ताहार

मृत्युर पर जन्म हय । जश्रोयाव दिलेक ये सन १२२९ साले जय-दुर्गार मृत्यु हय। ताहार मृत्युर पर सन १२३० साले पूर्णिमार पुत्र व्रजनाथेर जन्म हय । वोध हइल ये आपीलाण्ट जेला रङ्गपुर ओ दिनाजपुरर संक्रान्तेर परगणे ववनपुर ओ गएरहर ग्रामसकल दाविर वस्तुर हिस्या चारि आना पाच गण्डार दखल पाओनेर दाविते एइ एजेहारे नालिस करे ये मुर्द्दाइयार स्वामि कृष्णचन्द्र-चौधुरिर पितामह सदाशिवचौधुरिर दुइ पुत्र; प्रथम मुर्द्दाइयार स्वामिर पिता रामचन्द्र, द्वितीय रामानन्द, सदाशिवेर मृत्युर पर ताहार जमिदारि ओ गएरह ताहार दुइ पुत्र उभये विभाग पाइया रामचन्द्र ज्येष्ठप्रयुक्त रकम नय आना, आर रकम सात आना रामानन्देर हिस्या निर्द्धारित हय । रामचन्द्र तिन पुत्र कृष्णचन्द्र ओ हरिश्चन्द्र ओ कृष्णानन्दके ओयारिष आर ऐ नय आनार कम त्यक्त वस्तु राखिया मृत्यु हय । आर उभयेर विभागानुसारे मुर्द्दाइयार स्वामी कृष्णचन्द्रके रकम चारि आना पाच गण्डा आर कृष्णानन्द ओ हरिश्चन्द्रके रकम चारि आना पनरो गण्डा पौछिल । एवं प्रत्येक आपन २ हिस्यार पर दखिलकार हइल। मुर्द्दाइयार स्वामि कृष्णचन्द्र दुइ स्त्रि, मुर्द्दाइया ओ जयदुर्गा एवं मुर्द्दाइयार गर्भजात कन्या पूर्णिमा आर जयदुर्गार गर्भजात नावालक पुत्र कीर्त्तिचन्द्रके राखिया सन १२१२ साले मृत्यु हइले कीर्त्तिचन्द्रेर नाम जारि हइले सन १२२० साले कीर्त्तिचन्द्रेर मृत्यु हय । ताहार पर जयदुर्गार नाम जमिदारिर ताहुते लेखा जाय। किन्तु मुर्द्दाइया ओ जयदुर्गा दुइ जनेइ एक अक्के जमिदारिर पर दखिलकार एवं उसुल तहसिलेर कर्म्मकर्त्ता छिल । परे सन १२२९ सालेर पौष माहाते जयदुर्गारो मृत्यु हय। आर शास्त्रानुसारे विरधीय जमिदारी मुर्द्दइयार एवं ताहार दौहित्रेर सत्त्व आछे। भैरवचन्द्र मुर्द्दाआलेहे जश्रोयाव देय ये शास्त्रानुसारे जयदुर्गार ओ किर्त्तिचन्द्रेर पिण्डाधिकारि एवं वलवत्त ओयारिस आमि इति ।

यदी स्यात् एइ आदालतेर पण्डितेर व्यवस्थानुसारे, जाहा एइ आदालतेर इनफसालि ३०२६ लम्बरेर मकर्द्दमार ओ कमलाकान्तराय ओ(ग)एरह खास आपीलेर मकर्द्दमाते दाखिल, एवं ताहा हष्टे ऐ दुइ मकर्द्दमा इनफशान हय। प्रकाश आछे ये यदि पुत्र पितार तेर्य्य वस्तु ओयारिस सरवे पाइया इं पुत्रनां पौत्र ना राखिया मृत्यु हइया थाके एवं ताहार भग्निर पुत्रेर जन्म हइया किम्वा ताहार गर्भे थाके, तवे ताहार पितार दौहित्र उक्त त्याज्य वस्तुर ओयारिस ये पार्व्वणेर श्राद्ध ओ गएरह से करिते पारे हइवेक। आर यदि स्यात् दौहित्र ना जन्मिया थाके किम्वा ताहार मातार गर्भे ना थाके, ए प्रकारे उक्त मृत व्यक्तिर भग्नि, ये दौहित्र जन्मिवार आकर, ऐ ये पर्य्यन्त पुत्र ना हइवेक से पर्य्यन्त हकदार हइवेक। किन्तु मकर्द्दमार हालत हष्टे एवं उभयेर ओजर निष्पत्त्य कारण विशेषत ए मकर्द्दमाते व्यवस्था लओन उचित हइया हुकुम हइले ये एइ रोवकारिर नकल एइ हुकुमे ये छओयाल—एइ ये रामचन्द्रचौधुरि मृत्त हय, तिन पुत्र ओयारिस राखे, ज्येष्ठा स्त्रिर गर्भजात कृष्णचन्द्र आर द्वितीया स्त्रीर गर्भजात हरिश्चन्द्र ओ कृष्णानन्द, आर तिन भाइ, पितार त्याज्य वस्तु एइ रकमे, ये चारि आना पाच गण्डा कृष्णचन्द्र, आर चारि आना पोनरो गण्डा हरिश्चन्द्र, ओ कृष्णानन्द आपन २ विभाग करिआ लय। ततपरे कृष्णचन्द्रेर मृत्यु हय। ओयारिस राखिल दुइ स्त्रि लक्ष्मीप्रिया ओ जयदुर्गा, ओलक्ष्मीप्रीयार गर्भजात पूर्णिमा नामे एक कन्या, आर जयदुर्गार गर्भजात कीर्त्तिचन्द्र नामे एक पुत्र, आर कृष्णचन्द्रेर त्याज्य वस्तु कीर्त्तिचन्द्रे। एवं कीर्त्तिचन्द्र नावालग ओ अविवाहिता मृत्युर पर ताहार माता जयदुर्गाते पौछिल। जयदुर्गारो मृत्यु हइल आर ताहार मृत्युर पर पूर्णिमार गर्भजात एक पुत्र व्रजनाथ नामे जन्म हय। इहातेइ वाङ्गला देसेर प्रचलित शास्त्रानुसारे मृत कृष्णचन्द्रेर क्रिया ओ कर्म्म पार्व्वणेर श्राद्ध प्रभृति करिवार क्षेमता पूर्णिमार पुत्र

व्रजनाथ राखे, कि किष्णचन्द्रेर वैमात्रेय भ्राता हरिश्चन्द्रेर पुत्र भैरवचन्द्र राखे। आर कृष्णचन्द्रेर त्याज्य वस्तु इहारदिगेर मद्धे कोन व्यक्तिके पौछे—जओयाव दुइ सप्ताह मद्धे लेखेन—एइ आदालतेर पण्डितके हाओला करा जाय—इति।

## श्रीर्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतरिचार्डओआलपोलसाहेबधर्म्माधिकरणलिखितैतदब्दीयजानवरीमासीयनवमदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयतन्मासीयत्रिंशत्तमदिनसम्बन्धिबुधवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रश्नपत्रलिखितवृत्तान्ते सति मृतस्य कृष्णचन्द्रस्य पार्व्वणश्राद्धपिण्डदानादिक्रियाकरणक्षमतां मृतस्य कृष्णचन्द्रस्य दौहित्रोऽर्थात् पूर्णिमापुत्रो व्रजनाथ एव रक्षति, न तु कृष्णचन्द्रस्य वैमात्रेयभ्रातुर्हरिश्चन्द्रस्य पुत्रो भैरवचन्द्रः, एवं कृष्णचन्द्रस्य त्यक्तधनम्, यत्तन्मरणानन्तरं तत्पुत्रेण कीर्तिचन्द्रेण कीर्त्तिचन्द्रस्य मरणानन्तरं तन्मात्रा जयदुर्गया च प्राप्तम्, तद्धने यदि कीर्त्तिचन्द्रस्य मातुर्जयदुर्गाया मरणसमये कीर्तिचन्द्रस्य भगिन्याः पूर्णिमायाः कश्चिदेकोऽपि पुत्रोऽर्थाद् व्रजनाथोऽन्यः कश्चिद् वा गर्भे व्यवस्थितो भूमिष्ठो वा आसीत् तदा तस्याधिकारः। जाते च तस्याधिकारे पुनरुत्पत्स्यमानानां तद्भ्रात्रन्तराणामर्थात् कीर्त्तिचन्द्रस्य पितृदौहित्रान्तराणामप्यधिकारः समान एव भविष्यति। कृष्णचन्द्रस्य मरणानन्तरं तत्त्यक्तधनमुत्तराधिकारित्वेन तत्पुत्रेण कीर्त्तिचन्द्रेण प्राप्तम्, अतस्तद्धनं कीर्तिचन्द्रस्यैव जातम्। अतस्तस्मिन्नप्राप्तव्यवहारे अकृतविवाहे च मृते सति तस्य पुत्रमारभ्य पितृपर्य्यन्ताभावेन तत्त्यक्तधनं तन्मात्रा जयदुर्गया उत्तराधिकारित्वेन प्राप्तमपि जयदुर्गामरणोत्तरं कीर्तिचन्द्रत्यक्तधनं कीर्तिचन्द्रस्य मरणानन्तरं[1] ये कीर्तिचन्द्रस्योत्तराधिकारिणस्तेषामेव भवति, यथा पुत्रपौत्रप्रपौत्ररहितस्य मृतस्य धने पत्न्या उत्तराधिकारित्वेनाधिकारे जाते सत्यपि पत्न्या मरणोत्तरं पत्न्यनन्तरं पत्युर्ये उत्तराधिकारिणस्तेषामेव तद्धनं भवति, तथा पुत्रमारभ्य

१. मात्रनन्तर—व्यप.।

पितृपर्य्यन्तरहितस्य मृतस्य धने मातुरुत्तराधिकारित्वेनाधिकारे जाते सत्यपि मातुर्म्मरणोत्तरं मात्रनन्तरं पुत्रस्य ये उत्तराधिकारिणस्तेषामेव तद्धनं भवति ।

प्रकृते तु कीर्त्तिचन्द्रस्योत्तराधिकारिणां मध्ये कीर्त्तिचन्द्रस्य पुत्रमारभ्य तत्पितुः कृष्णचन्द्रस्य प्रपौत्रपर्य्यन्तानां कीर्त्तिचन्द्रस्य पितृदौहित्रादर्थाद् व्रजनाथात् पूर्व्वं कीर्त्तिचन्द्रस्य त्यक्तधनाधिकारिणां मध्ये इदानीं कश्चिन्नास्तीति प्रभुसमर्पितप्रश्नपत्रेण स्पष्टतरतयाऽवगमेन कीर्त्तिचन्द्रपितृदौहित्राधिकारस्य निष्प्रत्यूहत्वात्, सति च कीर्त्तिचन्द्रपितृदौहित्रे कीर्त्तिचन्द्रपितृव्यपुत्रस्य भैरवचन्द्रस्य नाधिकारः । यदि च कीर्त्तिचन्द्रस्य मातुर्जयदुर्गाया मरणसमये कीर्त्तिचन्द्रस्यैकोऽपि पितृदौहित्रो गर्भे व्यवस्थितो भूमिष्ठो वा नासीत्तदा कीर्त्तिचन्द्रस्य पितृदौहित्राणां स्वत्वान्यथानुपपत्त्या कीर्त्तिचन्द्रस्य भगिन्याः पूर्णिमायास्तत्पितृदौहित्रोत्पत्तिमूलीभूतायास्तत्सम्बन्धमूलीभूतायाश्च स्वपुत्रोत्पत्तेः प्राक्कालपर्य्यन्तं यथा पुत्रादिपत्नीपर्य्यन्तरहितस्य मृतस्य पितुर्द्धने दुहितुरधिकारस्तथा भ्रातृधनेऽप्यधिकारः । सति च कीर्त्तिचन्द्रस्य पितृदौहित्रे स्वतः कीर्त्तिचन्द्रस्य पितुः पार्व्वणश्राद्धपिण्डदातरि स्वतः कीर्त्तिचन्द्रस्य पितुः पार्व्वणश्राद्धपिण्डदानानधिकारिण्याः कीर्त्तिचन्द्रस्य भगिन्याः पूर्णिमाया नाधिकारः, किन्तु तस्याः पुत्रस्यैव, पुत्राणां वोपरिलिखितप्रकारेणाधिकारः—इति वङ्गदेशचलितमनु-दायभाग-दायतत्त्व-दायभागटीका-दायक्रमसंग्रह-श्राद्धतत्त्व-शुद्धितत्त्वविवादार्णवसेतु-विवादभङ्गार्णवादिग्रन्थानुसारिणी व्यवस्था—

अत्र प्रमाणम्—

*त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते*—इति मनुवचनम् ॥१॥

*पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः मातामहेभ्यः प्रमातामहेभ्यः वृद्धप्रमातामहेभ्यः स्वधोच्यताम्*—इति श्राद्धतत्त्वादिग्रन्थ( श्रात० पृ० २४३ )धृतगोभिलवचनम् ॥२॥

*पितुरपि प्रपौत्रपर्य्यन्ताभावे पितृदौहित्रस्याधिकारो बोद्धव्यो धनिदौहित्रस्येव*—इति दायभागग्रन्थलिखनम् ॥३॥

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्—इति दायभागादि-ग्रन्थधृतयाज्ञवल्क्यवचनम् ॥४॥

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।

तत्सुतो गोत्रजो बन्धुः—इत्यादिदायभागादिग्रन्थधृतयाज्ञवल्क्य-वचनम् ॥५॥

अपुत्रा शयनं भर्त्तुः पालयन्ती गुरौ स्थिता ।

भुञ्जीतामरणात् क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः॥—इति दायभागादि-ग्रन्थधृतकात्यायनवचनम् ॥६॥

यद्वा पत्नीत्युपलक्षणम्, स्त्रीमात्राधिकारे अयमर्थो बोद्धव्यः—इति दायभागग्रन्थलिखनम् ॥७॥

तदभावे पुनः पितृदौहित्र इति। तदभावे पितामहस्तदभावे पितामही तदभावे पितुः सोदरस्तदभावे पितुर्वैमात्रेयस्तदभावे पितृसोदरपुत्र (स्तदभावे) पितृवैमात्रेयपुत्रः—इत्यादि श्रीकृष्णतर्कालङ्कारकृतदायभागटीकालिखनम्। ८॥

यद्यपि दुहित्रभावे दौहित्रस्येव भगिन्या एव प्रागधिकारो युक्तस्त-थापि तस्याः स्त्रीत्वेन पार्व्वणापिण्डदातृत्वाभावान्नाधिकारः, दुहितुस्तु दौहित्रात् पूर्व्वमङ्गादङ्गात् सम्भवतीत्यादिविशेषवचनादेवाधिकार इति-भावः—इति श्रीकृष्णतर्कालङ्कारकृतदायभागटीकालिखनञ्चेति ॥९।

एतदब्दीयफेवरवरीमासीयषोडशदिनसम्बन्धिशनिवासरे मयेयं व्यवस्था दत्तेति—

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

———

२०—रोवकारि मिछील शदर देओयानी आदालत मो० कलि-काता आदालत मजकुरेर हाकीम श्रीयुत हेनरी सिकिसपीयेर साहेवेर वैठके। तारिख ३० जानेर इं सन १८३३ साल मोतावेक वाङ्गला सन १२३९साल १९ माघ दिवस वुधवार—

शामरासदासवनाम वेहालचन्द्र मोतओफीर ब्रि, राधा-चरण नावालगेर माता सुन्दरीदासी—

सोफलेष—

छाएल हाजीर आइल। छाएलेर छओयाल इं० सन १८३१ सालेर २० दिजम्बरेर लिखित, जेला छिलहट्टेर एकटी जज-साहेवेर फयछलार नाराजीर मोजेवातेर न्याय एइ मासेर १७ तारिखेर एइ आदालतेर हुकुम मोतावक जेला मजकुरेर तारिख मजकुरेर फयछला आर सादा कागजेर उपर एक केता व्यवस्था सम्वलित, जाहा एइ मासेर २३ तारिखे दाखिल हइया छिल, अनु-मोधने आइल। यद्यपि स्यात् तारिख मजकुरेर जजसाहेव मौछा-फर फयछलार लेखा आछे जे काजीयार वस्तु दोकान मजकुर मुर्दाआलेहेर स्वामीर स्वकृत थाकाते मुर्दाइ अर्थात् छाएल ताहार हकदार शाव्यागुजाइ हइते पारे ना। ए प्रयुक्त मोफनेशी आपील मञ्जुरि अथवा नामञ्जुरिर विषये चुडान्त हुकुम छादेर हओनेर पूर्व्वे हुकुम हईल जे छाएलेर छओयाल एइ मोकर्द्दमार फयछला सम्वलित एइ आदालतेर पण्डितेर निकट पाठान जाय एइ हुकुमे जे जदि स्यात् दुइ भ्राता, एक जन प्राप्तव्यवहार, द्वितीय, अप्राप्तव्यवहार, एकत्र थाके, आर भ्राता प्राप्तव्यवहार आपन सोपार्ज्जित हइते दोकान कारवार जारि करे। ए प्रकारे छोट भ्राता एमत दोकानेर किछु हिस्यार हकदार, एवं कि आन्दाज हइते पारे कि ना-ताहार व्यवस्था एक सप्ताह मध्ये दाखिल करेण-इति व्यवस्था दाखिल हओनेर परे कागजेर सामिल दरपेष हय—

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतहेनरीथिकिसपीयरसाहेवधर्म्माधिकरण-लिखितैतदब्दीयजानवरीमासीयत्रिंशत्तमदिवसीयविचारपत्रान्तर्गतप्रश्नप्रति-रूपपत्रमेवं .तत्समर्पितैतद्धर्म्माधिकरणार्थिनिवेदनपत्रमेतद्विवादविषय-

निविष्टजयपत्रञ्च यत्तदब्दीयफेवरवरीमासीयचतुर्द्दशदिनसम्बन्धिवृहस्पतिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

यदि द्वयोर्भ्रात्रोरेकत्रवासिनोर्म्मध्ये एकः प्राप्तव्यवहारो द्वितीयश्चाप्राप्तव्यवहारो भवति, एवञ्च प्राप्तव्यवहारो भ्राता स्वोपार्ज्जितधनात् हट्टे वाणिज्यव्यापारं करोति, तत्र यदि प्राप्तव्यवहारेण भ्रात्रा तद्वाणिज्यव्यापारमूलीभूतस्वोपार्ज्जितधनं पैतृकादिसाधारणधनाद्युपघातेनोपार्ज्जितं स्यात्, तद्धनेन कृतो यो वाणिज्यव्यापारस्तत्र व्यापारे कनिष्ठभ्रातुरपि शरीरायासश्चेद्यदेतत्तद्धर्म्माधिकरणार्थिनिवेदनपत्रेणैवं प्रभुसमर्पितजयपत्रलिखितेन यद्यप्यर्थी कदाचिद् विवादास्पदीभूतवाणिज्यविषये कर्म्म कृतवान् इत्यर्थिप्रत्यर्थिनोर्द्वयोरेव साक्ष्युपस्थापितवृत्तान्तेन ज्ञातमित्यनेन वावगम्यते तदा तद्वाणिज्यव्यापारोत्पन्नद्रव्यं पञ्चधा विभज्य तत्र भागद्वयं कनिष्ठभ्रातुर्भवितुमर्हति, साधारणपैतृकादिधनाद्युपघातेन स्वशरीरायासेन च प्राप्तव्यवहारस्य ज्येष्ठभ्रातुस्तद्वाणिज्यव्यापारमूलीभूतस्वोपार्ज्जितधने अंशद्वयाधिकारित्वेन कनिष्ठभ्रातुरेकांशाधिकारित्वात्। अतएवैतादृशसाधारणधनेन कृतो यो वाणिज्यव्यापारस्तद्व्यापारे द्वयोर्भ्रात्रोः शरीरायाससत्त्वेन पञ्चधाविभक्ततद्व्यापारोत्पन्नधने कनिष्ठभ्रातुरंशद्वयाधिकारित्वस्य शास्त्रीयत्वात्। यदि च प्राप्तव्यवहारेण भ्रात्रा तद्वाणिज्यव्यापारमूलीभूतस्वोपार्ज्जितधनं साधारणपैतृकादिधनाद्युपघातेन नार्ज्जितं स्यात् तदा साधारणपैतृकादिधनाद्यनुपघातार्ज्जितं धनं ज्येष्ठभ्रातुरेवासाधारणं जातम्। अतस्तद्धनेन कृतो यो वाणिज्यव्यापारस्तत्र व्यापारे यदि भ्रातृत्वेनांशित्वेनार्थात् साधारणप्रतियोगित्वेन कनिष्ठभ्रातुः शरीरायासस्तदा तद्वाणिज्यव्यापारोत्पन्नद्रव्ये कनिष्ठभ्रातुस्तृतीयांशाधिकारः, ज्येष्ठभ्रातुरसाधारणधनशरीरायासाभ्यां तद्धनोपार्जकत्वेनांशद्वयाधिकारित्वेनशरीरायासमात्रकर्त्तुः कनिष्ठभ्रातुस्तृतीयांशाधिकारित्वस्य शास्त्रीयत्वात्। यदि च प्राप्तव्यवहारेण भ्रात्रा तद्वाणिज्यव्यापारमूलीभूतस्वोपार्ज्जितधनं साधारणपैतृकादिधनाद्युपघातेन नार्ज्जितं स्यादेवं तद्धनेन कृतो यो वाणिज्यव्यापारस्तत्र व्यापारेऽपि भ्रातृत्वेनांशित्वेनार्थात् साधारणप्रतियोगित्वेन कनिष्ठभ्रातुः शरीरायासोऽपि नासीत्, यदि चेत् शरीरायासस्तदा

सोऽपि भृत्यत्वेनार्थाद् वेतनग्राहित्वेन, यत्प्रभुसमर्पिततज्जयपत्रलिखित-सिद्धीदासीप्रत्यर्थिनीनिर्द्दिष्टोत्तरपत्रलिखिततात्पर्य्यार्थेनार्थाद् अर्थी तद्वाणिज्यव्यापारे भृत्यत्वेनार्थाद्वेतनं गृहीत्वा गुमास्ताशब्दप्रतिपाद्यत्वेन स्थित इत्यनेनावगम्यते तदा तद्वाणिज्यव्यापारोत्पन्नद्रव्ये कनिष्ठभ्रातुरंशित्वेन किञ्चिदपि ग्रहणाधिकारिता नास्ति, साधारणपैतृकादिधनाद्यनुपघातेन स्वोपार्जितधनस्य ज्येष्ठभ्रातुरसाधारणधनत्वेनासाधारणस्वत्वास्पदीभूतेन तेन धनेन कनिष्ठभ्रातुर्भ्रातृत्वेनांशित्वेनार्थात् साधारणप्रतियोगित्वेन शरीरायासमन्तरेण ज्येष्ठभ्रातृकृततद्वाणिज्यव्यापारोत्पन्नद्रव्ये ज्येष्ठभ्रातुरेवासाधारणसत्त्वेन, तत्र कनिष्ठभ्रातुस्साधारण्याप्रतियोगिनः किञ्चिदपि स्वत्वाभावात्—इति वङ्गदेशान्तर्गतश्रीहट्टप्रदेशप्रचलितदायभागदायतत्त्व-दायभागटीकादायक्रमसंग्रहविवादार्णवसेतुविवादभङ्गार्णवादिग्रन्थानुसारिणी व्यवस्था—

अत्र प्रमाणम्—

साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम् ।<br>
शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥<br>
तस्य भागद्वयं देयं शेषास्तु समभागिनः—इति दायभागादिग्रन्थ-धृत( दाभा० पृ० १०७ )व्यासवचनम् ॥ १ ॥

यत्र पुनः साधारणधनमात्रेणैकस्य व्यापारोऽपरस्य धनशरीरायासाभ्यां तत्रैकस्यैको भागोऽपरस्य भागद्वयं न्यायावगतमेव निबद्धम् । एतेन चैतदपि सिद्ध्यति यत् साधारणधनोपघाते सति यस्य यावतोंऽशस्य स्वल्पस्य महतो वोपघातस्तस्य तदनुसारेण भागकल्पना कार्या—इति दायभाग( पृ० १०९।११० )ग्रन्थलिखनम् ॥ २ ॥

तस्मात्साधारणधनोपघातार्जितं धनं विभजेदिति विधिः—इति दायभाग( पृ० ११५ )ग्रन्थलिखनम् ॥ ३ ॥

तस्मादनुपघातार्जितमर्ज्जकस्यैव, नेतरेषामिति सिद्धम्—इति दायभागग्रन्थलिखनम् ( पृ० ११२ ) ॥ ४ ॥

एवं यत्रैकेन शरीरव्यापारमात्रेणापरेण च स्वधनशरीरायासाभ्याम-

र्ज्जितं तत्र शरीरायासमात्रेणार्ज्जकस्यैकांशित्वं धनशरीरायासाभ्यामर्ज्जकस्य द्व्यंशित्वं न्यायसाम्यात्--इति दायक्रमसंग्रह( पृ० २८ )ग्रन्थलिखनम् ॥५॥

विभक्तेनाविभक्तेन वा साधारणधनानुपघातेनापरव्यापारनैरपेक्ष्येण च यदर्ज्जितं तदर्ज्जकस्यैव तदविभाज्यमितरैः--इति दायक्रमसंग्रहग्रन्थ-( पृ० २२ )लिखनम् ॥ ६ ॥

एतदब्दीयमार्चमासीयचतुर्द्दशदिनसम्बन्धिवृहस्पतिवासरे मयेयं व्यवस्था दत्तेति—

श्रीर्ज्जयतितराम्—

श्रीवैद्यनाथमिश्रेण

———

३३२५ नं—

२१—रोवकारी मिछिल सदर देओयानि आदालत मजकुरेर हाकिम श्रीयुत हेनरि सिकिसपीएर साहेबेर वैठके, तारिख ५ फित्ररेल इं सन १८३३ साल मोतावेक वाङ्गला सन १२३९ साल तारिख २५ माघ दिवस मङ्गलवार—

गोशाञीचन्द्रकविराज आपीलाण्ट

मोछम्मात जयमनी जीवतमान

ओ कृष्णमणि मोतओफात रेष्पाडण्टान

आपीलाण्टेर उकिल मुनशी हयदर आलि ओ रेष्पाडण्टानेर मध्ये जीवतमान एक जन मोछम्मात जयमणिर उकिल मुनशी गोलाम वतुल हाजिर आइल। एवं इस्तहारनामा जारि हओयाते ओ कृष्णमणी मोतओफात रेष्पाडण्डेर कोनो ओयारिश ए आदालते हाजीर आइल ना। एइ मोकद्दमा इत पूर्व्व इं० सन १८३२ सालेर शेतम्वर माहार ·० तारिखे आमार वैठके रोवकार एवं साम्यक[1] कागजात पडा हइया तारिख मजकुरेर रोवकारिर लिखित मते एइ आदालतेर पण्डितेर स्थाने व्यवस्था

१ सम्वलित—इति साधीयान् पाठः।

तलब हइया आर व्यवस्था पौंछिले पर गतो कल्य दरपेष हइया ताहार अनुमोधनान्ते दिवावसान प्रयुक्त मुलतवि छिल, अद्य पुनराय दरपेष हइल। एइ आदालतेर पण्डितेर व्यवस्थार लिखित यञ्ओयावेर द्वाराय एइ मोकद्दमार आशल मुर्दाइयान मोछम्मात कृष्णमणी ओ जयमनीके भैरवकविराजेर तरफेर जोवानि हेवार सत्वतार विषये जेलार आदालतेर व्यवस्था वहाल हइते छे। किन्तु जेलार फयछलार द्वाराते, याहा प्रविनशीयान क्रोटेर तजविज कालिन वहाल हइयाछे, प्रकाश हय ना ये कृष्णमणीर हक भैरवेर हेवार वुनियादे किम्वा आपन पिता गङ्गानारायणेर उत्राधिकारिर हकेर वुनियादे डिगरि हइयाछे। ये कारण फयछला मजकुरेते उहार हक दुइ प्रकारेइ जप्त[1] (?) हइयाछे, आर एइ क्षणे एइ विशय मोकद्दमार तजविजे मातवर हइयाछे ये हेतुक मोछम्मात कृष्णमणीर प्रविनशीयान क्रोटेर फयछलार पर मृत्यु हइयाछे, परे एइ विशयेर तलास आर तजविज उचित ये कृष्णमनीर हिस्यार पर उभय विवादिर मध्ये कोन व्यक्ति हकदार हइते पारे। आर पण्डितेर व्यवस्थार द्वाराते प्रकाश ये यद्यपि स्यात् मोछम्मात कृष्णमणी विवादीय वस्तु हेवार द्वाराय पाइया थाके, वस्तु मजकुरा ताहार स्त्रीधन हइवेक, आर उहाके क्षमता आछे ये आपन इतसा मते हस्तान्तर करिते पारे, ये प्रकार जयमनी रेष्पाडण्ट एइ आदालतेर आपीलेर मौजेवातेर जञ्ओयावे ताहा उहाके हेवाकरण प्रकाश करियाछे। आर यदि स्यात् विवादीय वस्तु मोछम्मात मजकुराके पितृ उत्राधिकारिर सुरते पौंछियाछे, आर आपीलाण्टेर पिता वैद्यनाथेर परे, ये प्रकार मोकद्दमार कागजातेते प्रकाश, मोछम्मात मजकुरार मृत्यु हइयाछे, तवे ए प्रकारे पण्डितेर व्यवस्था मते मोछम्मात कृष्णमणीर हकीयतेर हकदार ना आपीलाण्ट ना रेष्पाडण्ट हइते पारे। यदि गङ्गानारायणेर ओयारिष, ये केहो थाके, उहार हक राखिवेक। एइ सकल विशयेर प्रति

१. जद—व्यप०।

दृष्टि हुकुम हइल, ये जयमणीर प्रकाश करा सोछम्मीत कृष्णमणीर हेवार विषये ये प्रकार एइ आदालतेर आपीलेर मौजेवातेर यत्रोयावे लिखियाछे, रेष्पाडण्टेर स्थाने सावुद तजवेर पूर्व्वे एइ आदालतेर पण्डितेर स्थाने जिज्ञाशा कराजाय ये यदि स्यात् कोन व्यक्ति मिलकियतेर दावि उत्तराधिकारिर एवं दानेर दुइ बुनियादे दरपेष करे, आर दुइ मतेइ डिगरि हासिल करे, आर तत्परे आपन हकीयत दोशराके हेवा करिया मृत्यु करे—ए प्रकारे एमत हेवा सिद्ध हइते पारे कि ना इति—

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतहेनरीसिकिसपीयरसाहेवधर्म्माधिकरणलिखितैतदब्दीयफेवरवरीमासीयपञ्चमदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयतन्मासीयषड्विंशतितमदिनसम्बन्धिमङ्गलवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

यदि काचित् स्त्री धनस्य प्राप्तीच्छापूर्व्वकाभियोगमुत्तराधिकारित्वदानाभ्यां करोति, एवमुत्तराधिकारित्वदानाभ्यां द्वाभ्यामेव हेतुभ्यां धर्म्माधिकरणतो जयपत्रं प्राप्नोति, तदनन्तरं धर्म्माधिकरणीयजयपत्रानुसारेण स्वस्वत्वास्पदीभूतधनमन्यस्मै दत्त्वा मृता स्यात्तदैतादृशदानं सिद्ध्यत्येव, उत्तराधिकारित्वदानाभ्यां द्वाभ्यामेव तस्याः स्वत्वस्य तद्धने निश्चितत्वेन द्वयोर्मध्ये दानस्यापि तत्स्वत्वोत्पादकस्य सत्त्वात्। एतद्विवादविषयनिविष्टास्मद्दत्तप्राचीनव्यवस्थालिखितप्रकारकतद्दानानुसारेण तस्यास्तस्मिन् सौदायिकस्त्रीधने स्वेच्छया दानाधिकारस्य निष्प्रत्यूहत्वात्—इति वङ्गदेशचलितोपरिलिखितव्यवस्थालिखितग्रन्थानुसारिणी व्यवस्था—

अत्र प्रमाणम्—

तद्व्यवस्थालिखितपञ्चमप्रमाणं षष्ठप्रमाणञ्चेति। एतदब्दीयमार्च्चमासीयाद्वादशदिनसम्बन्धिसोमवासरे मयेयं व्यवस्था दत्तेति—

श्रीर्ज्जयतितराम्

श्रीवैद्यनाथमिश्रेण

२२—रोवकारि मिसिल सदर देओयानी आदालत मोकाम कलिकाता आदालत मजकुरेर हाकिम श्रीयुत रिचार्ड ओयालपोल साहेबेर बैठके। तारिख २० फिवरेल इं सन १८३३ साल मों बाङ्गला सन १२३९ साल तारिख १० फाल्गुन दिवस बुधवार—

सोछम्मांत लक्ष्मीप्रिया आपीलाण्ट

भैरवचन्द्रचौधुरि ओ गयरह रेष्पाडेण्टान्

आपीलण्टेर उकिल मुनसि होसन आलि ओ हाजिर रेष्पाडेण्टर उकिल सदासुखपण्डित हाजिर आइल। आर द्वितीय रेष्पाडेण्ट जयचन्द्रचौधुरि इयानामा ओ इस्ताहारनामा जारि हओयातेओ सयं किम्वा उकिलेर द्वाराय हाजिर नाइ। एइ मकद्दमा गतो जानेर माहार ९ तारिखे आमार बैठके रोवकार एवं एइ मकद्दमार साम्यक कागजात आर ३०२६ लम्वरेर मकद्दमार कागजात आर कमलाकान्तराय ओ गयरह वनाम गङ्गाचरणसेनेर खास आपिलेर छओयाल ओ तत्समिभ्यारि कागजात पडा हइया तारिख मजकुरेर रोवकारिर लिखित छओयालेर जओयाव एइ पण्डितेर स्थाने तलव हइया मुलतवि छिल, अद्य एइ आदालतेर पण्डितेर जओयाव दाखिल हओने पुनुराय रोवकार आर गतो जानेन माहार २९ तारिखे अनुमोधन हओया भैरवचन्द्र रेष्पाडेण्टर छओयाल अनुमोधने आइल। तत्परे हाजिर रेष्पाडेण्टर उकिल सदासुखपण्डित क्रोट आपीलेर दाखिल करा रेष्पाडेण्टर छओयालेर नकल एक केता दुइ टाकार किम्मतेर एक केता फिरिस्तिर द्वाराय दाखिल करे, पडागेल। यदि स्यात् एइ आदालतेर पण्डितेर जओयाव हइते प्रकाश आछे ये कृष्णचन्द्रेर पुत्र किर्त्तिचन्द्रेर त्यार्ज्य वस्तु, ये ताहार माता जयदुर्गाते आसिया, जयदुर्गार मृत्युते किर्त्तिचन्द्रेर भग्नी पूर्णिमार पुत्र व्रजनाथके अर्शे। किन्तु रेष्पाडेण्टर उकिल जाहेर करे जे विवादीय जायेगा जयदुर्गार मृत्यु हओने भैरवचन्द्रेर दखले आइसे। एवं एखन

পর্য্যন্ত তাহার দখলে আছে, আর পূর্ণিমার পুত্র ব্রজনাথের মৃত্যু হইয়াছে। আর মোছম্মাত পূর্ণিমার সেত্রী রোগি আছে, শাস্ত্রানুসারে বৈমাত্রেয় ভ্রাতার কিম্বা তাহার পুত্রের ত্যাজ্য বস্তুর অধিকারিত্ব রাখে না। এতদ্ভিন্ন মোছম্মাত পূর্ণিমার বিবাহ, জাহার সহিত নিঃধার্য্য হইয়াছিল পরে তাহার সহিত না হইয়া অন্য ব্যক্তির সহিত বিবাহ হইয়া পুত্র উৎপত্তি হয়, আর এ প্রকার স্ত্রী এবং পুত্র পার্ব্বণের শ্রাদ্ধের ও পূর্বপুরুষের ত্যাজ্য বস্তুর অধিকারি হয় না, আর জখন মুদাইআনের দাবি কোর্টের পণ্ডিতের ব্যবস্থার লিখিত, যে লক্ষ্মীপ্রিয়ার বিবাদীয় জায়গার অধিকারিত্ব নাই, দৃষ্টে ডিসমিস হয় তখন রেস্পাণ্ডেণ্টের ওজরের তত্ত ও তদান্ত করণের আবিশ্বক থাকিল না। জে প্রকার প্রিবিনসিয়ান কোর্টের ফয়ছলা তাহার দৃষ্টান্ত আছে। আর আপীলাণ্টের উকিল জিজ্ঞাসা মতে জাহের করে যে পূর্ণিমার পুত্র ব্রজনাথের এই দরুণ মৃত্যু হইয়াছে, আর এখন পর্য্যন্ত তাহার পুত্র হওনের সম্ভাবনা আছে, আর মোছমাত মজকুরার বিবাহ দুই বার হয় নাই, এবং তাহার সেত্রি রোগ নাই ইতি। যদ্যপি স্যাৎ মোকদ্দমা নিষ্পত্ত্য হওনের পূর্ব্বে বিচার অনুসারে উভয় বিবাদীর ওজর নিষ্পত্ত্য করা উচিত। এ কারণ হুকুম হইল যে এই রোবকারির নকল এই হুকুমে জে নিচের লিখিত ছওয়ালের জওয়াব আগতো মিছিলে লেখেন এই আদালতের পণ্ডিতকে সমার্পন করা জায়।

১ প্রথম—এই যে যদি স্যাৎ পূর্ণিমার পুত্র ব্রজনাথের জন্ম হইয়া মৃত্যু হইয়া থাকে, তবে কির্ত্তিচন্দ্রের ত্যাজ্য বস্তু, যাহা ব্রজনাথকে আসিয়াছিল, তাহা তাহার মাতাকে অর্শে কি না।

২ দ্বিতীয়—এই যে পূর্ব্বপুরুষের বস্তুতে উত্তরাধিকারি ব্যক্তি সেত্রি রোগ জন্য তাহার অধিকারিত্বতে প্রতিবন্ধক হয় কি না। যদ্যপি স্যাৎ উক্ত সেত্রিরোগ অধিকারিত্বের প্রতিবন্ধক হয়, তবে

व्रजनाथेन[1] त्याज्य वस्तु ताहार मातामहि मोछम्मात लक्ष्मीप्रियाके अर्शिवेक कि ना।

३ तृतीय--एइ ये मोछम्मात पूर्णिमार विवाह कोन व्यक्तिर सहित निःधार्य्य हइया पूर्व्व कथवकथनेर वहिर्भूत हइया अन्य-कोन व्यक्तिर सहित विवाह हय आर ताहा हैते ताहार पुत्र सन्तान जन्मिया थाके। ए मते मोछम्मात पूर्णिमा किम्वा ताहार पुत्र कीर्त्तिचन्द्रेर त्याज्य वस्तुर अधिकारि हइवेक कि, पूर्णिमार माता लक्ष्मीप्रिया इति।

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतरिचार्डओआलपोलसाहेवधर्म्माधिकरणलिखितैतदब्दीयफेवरवरीमासीयविंशतितमदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयमार्च्चमासीयषोडशदिनसम्वन्धिशनिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रथमप्रश्नस्योत्तरम्—

यदि पूर्णिमापुत्रो व्रजनाथ उत्पन्नो भूत्वा मृतः स्यात् तदा कीर्त्तिचन्द्रस्य त्यक्तधनं यदुत्तराधिकारित्वेन व्रजनाथेन प्राप्तम्, तद्धने यदि व्रजनाथस्य पुत्रमारभ्य पितृपर्य्यन्तानां मध्ये कश्चिन्नास्ति तदा तन्मातुरेवाधिकारइति।

अत्र प्रमाणम्—

*पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।*

*तत्सुतः*—इत्यादि दायभागादिग्रन्थधृतयाज्ञवल्क्यवचनम् ॥१॥

द्वितीयप्रश्नस्योत्तरम्—

यद्युत्तराधि(कारि)व्यक्तेः श्वेतरोगस्तदा यथाशास्त्रप्रायश्चित्ताचरणं विना पूर्व्वाधिकारित्यक्तधने अधिकारस्य प्रतिरोधो भवत्येव, यथाशास्त्रप्रायश्चित्ताचरणे सत्यधिकारस्य प्रतिरोधो न भवतीति।

---

१. व्रजनाथेर—इति साधीयान् पाठः।

अत्र प्रमाणम्—

मृते पितरि न क्लीबः कुष्ठ्युन्मत्तजडान्धकाः ।

पतितः पतितापत्यं लिङ्गी दायांशभागिनः ॥—इति दायभागादि-ग्रन्थधृतदेवलवचनम् ॥१॥

कुष्ठी अकृतप्रायश्चित्तः । कृतप्रायश्चित्तस्य पापाभावादंशित्वम्, पापस्यैवानंशितामूलत्वादिति साम्प्रतम्—इति विवादभङ्गार्णवग्रन्थ-(पृ० २१२ क)लिखनम् ॥२॥

तृतीयप्रश्नस्योत्तरम्—

यदि पूर्णिमाया विवाहः केनचिद् व्यक्तिविशेषेण सह निर्द्धारितोऽपि पूर्व्वकथावहिर्भावेणान्येन केनचित् सह विवाहो जातः स्यादेवं तेन पुरुषेण पूर्णिमायाः पुत्रो जनितश्चेत्तदा तस्याः पूर्णिमायाः किंवा[1] तत्पुत्रस्य कीर्त्ति-चन्द्रत्यक्तधने एतद्विवादविषयनिविष्टास्मद्दत्तपूर्व्वव्यवस्थालिखितप्रकारेणा-धिकारो भवत्येव—इति वङ्गदेशचलितोपरिलिखितव्यवस्थालिखितग्रन्था-नुसारिणी व्यवस्था—

एतदब्दीयमार्च्चमासीयषड्विंशतितमदिनसम्बन्धिमङ्गलवासरे मयेयं-व्यवस्था दत्तेति—

श्रीर्ज्जयतितराम्

श्रीवैद्यनाथमिश्रेण

---

२३—रोवकारि मिछिल सदर देओयानि आदालत मोकाम । कलिकाता आदालत मजकुरेर हाकिम श्रीयुत रिचार्ड ओयालपूल साहेवेर वैठके, तारिक २० फिवरेल इं सन १८३३ साल मोतावेक वाङ्गला सन १२३९ साल तारिख १० फाल्गुन दिवस वुधवार—

| | |
|---|---|
| दुलारसिंह ओ गयरह | आपीलाण्टान् |
| राणी पद्मावती ओ गयरह | रेष्पाण्डाण्टान् |

---

१. किम्वा—व्यप० ।

आपीलाण्टानेर उकिलान् मुनशी होशन आलि ओ मुनशी आब्बाछ आलि आर राणी पद्मावती रेष्पाडण्टेर उकिलान् सदासुखपण्डित लाला बस्तिलाल हाजिर आइल ओ आपीलाण्टानेर उकिल मुनशी दादार बक्स ओ रेष्पाडण्टेर उकिल मुनसी गोलाम वतुल वेयारामी ओजरे हाजिर नाइ। एइ मोकद्दमा एइ मासेर १४ तारिखे आमार वैठके रोवकार हइया प्रीविनशीयान क्रोटेर नालिसि आरजि ओ गयरह कागजात लम्बर पर्य्यन्त पडा हइया मुलतवि छिल, अद्य पुनराय रोवकार हइया प्रीविनशीयान क्रोटेर वाकि कागजात फयछला पर्य्यन्त एवं एइ आदालतेर कागजात अनुमोधने आइल। वोध हइल ये आपीलाण्टान् सावेक मुर्दाइयान परगणे पौयाखालि ओ गयरह महालते खेराजी ओ नाखेराजी दखल पाओनेर दाविते एइ एजहारे नालिस करे ये परगणे पौयाखालि ओ गयरह मुर्दाइआनेर पितामह गरिवदासेर हासिल करा, उक्त गरिवदाष ताहाते जिवद्दशा पर्य्यन्त दखलिकार थाकिया पाच पुत्र हरिसिंह ओ जयसिंह ओ रनसिंह ओ भातुसिंह ओ अचलसिंह मुद्दाइआनेर पिताके राखिया मृत्यु हय। हरिसिंह ओ ताहार मृत्युर पर शुभकरणसिंह तस्य पुत्र आर शुभकरणसिंहेर मृत्यु, ये सन १२१६ सालेर फाल्गुन माहाते हइयाछे, ताहार पर पहुपतसिंह आर पहुपतसिंहेर मृत्युर पर रङ्गलालसिंह भ्रातृगण ओ पितृव्यदिगेर अनुमति ओ एतर्फाके पितृ-पितामह त्याय्यं वस्तुर पर एवं चकदेनाओरि ओ गयरहर उपर, याहा ताहार मुनाफा हइते खरिद हय, कावेज ओ दखलिकार एवं उसुल तहशीलेर कर्म्मकर्त्ता थाकिया, भ्रातृगण ओ पितृव्यदिगेर एवं मुर्दाइआनेर प्रतिपालन करिते-छिल। रङ्गलालसिंहेरओ सन १२३२ साले निःसन्तान ओ अविवाहित विणा ओछी मोकरार मृत्यु हइल, आर मुर्दाइआन व्यतिरेक उहारदिगेर उत्तराधिकारि ओ पिण्डाधिकारि द्वितीय केह नाइ, एवं शास्त्रानुसारे मृत रङ्गलालसिंहेर श्राद्ध ओ क्रिया-

कर्म्मं दुलारसिंह मुर्दाइर हस्तेते हइयाछे, इति। राणी पद्मावती मुर्दाआलेहे जओयाव देय ये परगणे पौयाखालि हरिसिंहेर हासील करा, आर चकदेनाओरि ओ गयरह मुर्दाआलेहेर स्वामी पहुपतसिंहेर पिता शुभकरणसिंहेर खरिदा। मुर्दाआलेहेर स्वामी पुष्यपुत्र राखनेर विषये उहाके अनुमति देय आर रङ्गलालसिंह कर्त्तापुत्र राखनेर भार उहार प्रति अर्पन करिया एक केता ओछीयतनामा ऐ विषयेर लिखिया मृत्यु हय। आर पूर्व्व पुरुषेर श्राद्ध ओ क्रियाकर्म्मते आपनि अशक्त थाकन प्रयुक्त त्याज्यं वस्तुर कर्त्तार उत्तराधिकारि ताहार त्याज्य वस्तु हइते नैरास हइते पारे ना। आर अमृतलाल ओ चरङ्गीलाल ओ कालीप्रसाद ओ विशनलाल मुर्दाआलेहेर जओयावेर मजमुन कछल करिया जओयाव गुजराय। आर प्रीविनसियान कोर्टेर तजविज कालिन मुर्दाइआनेर दावि डिसमिस हय। यदि स्यात् कागजात हइते प्रकाश ये मुर्दाइआनेर आशल दावि रङ्गलालेर त्याज्यं वस्तुर वावत, आर गरिवदास ओ गयरहेर त्याज्य वस्तुर उल्लिक करार कारण किरल (?) पूर्व्व पुरुषेर परस्पर मृत्युर विवरण प्रकाश जन्य लेखा गिया छे। आर आपीलाण्टानेर एजहार एइ ये उहारदिगेर वंशे मैथिलि शास्त्र चलन आछे—उचित वोध हय। एवं रेष्पाडण्टओ ताहाते अस्वीकार नहे। ए प्रयुक्त एइ मोकद्दमार एइ तजविज ओ रोधकरण ये रङ्गलालसिंह, ये अविवाहित ओ निःसन्तान मृत्यु हइयाछे, ताहार त्याज्यं वस्तुर उत्तराधिकारित्व उभय विवादि ओ तृतीय व्यक्तिर मध्ये कोन व्यक्ति मैथिलि देशेर प्रचलित शास्त्रानुजाइक राखे। परे हुकुम हइल ये एइ रोवकारिर नकल एइ हुकुमे ये छओयालेर यओयाव ये विवादीय जमीदारी हरिसिंह हइते हरिसिंहेर पुत्र शुभकरणसिंहे आर शुभकरणसिंहेर मृत्युर पर शुभकरणसिंहेर ज्येष्ठ पुत्र पहुपतसिंहे, आर पहुपतसिंहे मृत्युर पर शुभकरणसिंहेर कनिष्ठ पुत्र रङ्गलालसिंहे विणा विभागे अर्शिल। तत्परे

रङ्गलाल निःसन्तान ओ अविवाहित मृत्यु हय, राखिल मुद्दाइयान अचलसिंहेर पुत्रगण आर अर्ज्जनसिंह रणसिंहेर पुत्र आर तुलसीसिंह भातुसिंहेर पुत्र गरिवदासेर पुत्रगण हरिसिंहेर भ्रातृ-वर्ग आर सोछम्मीत पद्मावती मुर्दाआलेहे पहुपतसिंहेर स्त्री आर शुभकरणसिंहेर दौहित्र उपेन्द्रलाल ओ दयालाल ओ गिरिधारि-लाल ओ प्रेमलाल ओ जनकलालके परे। मैथिलि देशेर प्रचलित-शास्त्र अनुजाइक रङ्गलाल मजकुरेर त्याज्यं वस्तु इहारदिगेर कोन व्यक्तिके अर्शिवेक–एक सप्ताह मध्ये वचन दृष्टान्त सम्वलित लिखेन एइ आदालतेर पण्डितके समर्पन कराजाय–इति।—

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतरिचार्डओआलपोलसाहेवधर्म्माधिकरणलिखितैतदब्दीयफेवरवरीमासीयविंशतितमदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयमार्च्चमासीयषोडशदिनसम्बन्धिशनिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

यदि विवादास्पदीभूतसराजकरस्थावरं (धनं) हरिसिंहस्य मरणानन्तरं तत्पुत्रेण शुभकरणसिंहेन प्राप्तम्, शुभकरणसिंहस्य मरणानन्तरं तज्ज्येष्ठपुत्रेण[1] पुहपतिसिंहेन प्राप्तम्, तन्मरणानन्तरं तद्भ्रात्रा रङ्गलालसिंहेनार्थात् शुभकरणसिंहस्य कनिष्ठपुत्रेणाविभक्तत्वेन प्राप्तम्, तदनन्तरं रङ्गलालसिंहोऽविवाहितो निस्सन्तान एवाचलसिंहस्य पुत्रानर्थिनः एवं रणसिंहस्य पुत्रमर्ज्जनसिंहं भातुसिंहस्य पुत्रं तुलसीसिंहं चैवं पुहपतिसिंहस्य पत्नीं पद्मावतीनाम्नीं प्रत्यर्थिनीं चैवं शुभकरणसिंहस्य दौहित्रानुपेन्द्रलालदयालालगिरिधारीलालप्रेमलालजनकलालान्[2] संत्यज्य मृतः स्यात्तदा रङ्गलालत्यक्तधने रङ्गलालस्य पुत्रमारभ्य तत्प्रपितामहपुत्रपर्य्यन्तानामर्थाद् गरीवदासस्य पुत्रपर्य्यन्तानाम्मध्ये यदि कश्चिन्नास्ति तदा रङ्गलालप्रपितामहगरीवदासपौत्राणामर्थादर्थिप्रभृतीनां प्रभुकृतप्रश्नलिखितानामधिकारो रङ्गलालभ्रातृपत्नी पद्मावती यावज्जीवं स्वभर्तृकुलोपयुक्तग्रासाच्छादनस्यावश्यक-

१. तत्केज्येष्ठ०—व्यप०।
२. ०जनकलालान—व्यप०।

विधवाधर्म्माद्याचरणोपयुक्तस्य चाधिकारिणी भवति—इति मिथिलादेश-चलितमनुविवादचिन्तामणिविवादरत्नाकरविवादचन्द्रकल्पतरुप्रभृतिग्रन्थानुसारिणी व्यवस्था—

अत्र प्रमाणम्—

*पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।*

*तत्सुतो गोत्रजो बन्धुः*—इत्यादिविवादचिन्तामण्यादिग्रन्थधृतयाज्ञवल्क्य वचनम् ॥१॥

*बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।*

*यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत्* ॥–इति विवादचन्द्रविवादरत्नाकरादि (वि० पृ० ५६६) ग्रन्थधृतबृहस्पति( पृ० २१६ )वचनम् ॥२॥

*अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्* ।—इति मनुवचनम् ॥३॥

*अनपत्यस्य धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे मातृगामि तदभावे पितृगामि तदभावे भ्रातृगामि तदभावे भ्रातृपुत्रगामि तदभावे बन्धुगामि तदभावे सकुल्यगामि*–इत्यादि विवादचिन्तामण्यादिग्रन्थधृतविष्णुवचनम् ॥४॥

*बन्धुरत्र सपिण्डः सकुल्यः सगोत्रः*—इति विवादचिन्तामणि(पृ० २३६ )ग्रन्थलिखनम् ॥५॥

*सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते*—इत्यादि विवादचिन्तामण्यादिग्रन्थधृतबृहस्पतिवचनम्[१] ॥६॥

*भरणं चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात्*—इति विवादचिन्तामण्यादि( पृ० २५० )ग्रन्थधृतशङ्खवचनञ्चेति ॥७॥

एतदब्दीयापरेलमासीयतृतीयदिनसम्बन्धिबुधवासरे मयेयं व्यवस्था दत्तेति—

श्रीर्ज्जयतितराम्

श्रीवैद्यनाथमिश्रेण

———

१. वृद्धमनु–इति, धको० ।

२४—रोवकारि सिसिल सदर देओयानि आदालत मोकाम कलिकाता आदालत मजकुरेर हाकिम श्रीयुत रिचार्ड ओयाल-पोल साहेवेर वैठके। तारिख २५ आपरेल इं सन १८३३ साल मोतावके वाङ्गला सन १२४० साल तारिख १४ वैशाख दिवस वृहस्पतिवार—

मसम्मात लक्ष्मीप्रिया आपीलाण्ट
भैरवचन्द्रचौधुरि ओ गयरह रेष्पाडेण्डान

आपीलाण्टेर उकिल मुनसि होसन आलि ओ हाजिर रेष्पा-डेण्ड भैरवचन्द्रचौधुरिर उकिल सदासुखपण्डित हाजिर आइ-लेन, आर द्वितीय रेष्पाडेण्ड जयचन्द्रचौधुरि इयानामनामा ओ इस्ताहारनामा जारि हेतु आपनि किम्वा उकिलेर द्वाराय ए आदालते हाजिर नाइ। एइ मोकद्दमा भिन्न २ दिवसे आमार वैठके रोवकार हइया एइ आदालतेर पण्डितेर व्यवस्था ओ कागजात आर उभयेर दाखिल करा दरखास्तादी पडा हइया व्रजनाथेर पिताके दरखास्त दाखिल करण हुकुम हइया मुलतवि छिल, अद्य पुनुराय रोवकार आर व्रजनाथेर पिता गौरमोहनचट्टोपाध्यार दरखास्त ओ व्रजनाथेर माता मोसम्मात पूर्णिमार दरखास्त पडा गेल। यदि स्यात् एइ आदालतेर पण्डितेर पूर्व्वेर ओ एइ क्षनेर व्यवस्थासकलेर द्वाराय प्रकाश आछे ये कीर्त्तिचन्द्रेर त्यार्य्यं वस्तु व्रजनाथके, आर यदि स्यात् पूर्णिमार पुत्र व्रजनाथेर जन्म हइया मृत्यु हइयाथाके, तवे कीर्त्तिचन्द्रेर त्यार्य्यं वस्तु, याहा उत्तराधि-कारि हेतुते व्रजनाथके अर्शियाछिल, यदि व्रजनाथेर इस्तक पुत्र नां(?)पिता केह ना थाके, तवे ताहार माताके अर्शे, आर शेत्रि-रोगेर प्रायश्चित्त करणेते सेत्री रोगी व्यक्ति उत्तराधिकारिर वाधि-त्य(?)पूर्व्वपुरुसेर विशयेते हय ना। किन्तु व्रजनाथेर पिता गौर-मोहनचट्टोपाध्याय वर्त्तमान आछे। आर मोछम्मात पूर्णिमा जाहेर करे ये विवादीय वस्तु आमार पितार त्यार्य्य वस्तु, ओ ताहार विज पुरुसेर, एवं उक्त मोसम्मात सन्तान हओनेर आ-

स्वास राखे। आर एइ आदालतेर पण्डितेर पूर्व्वेर व्यवस्थाते विस्तारित करिया लेखा गियाछे ये यदि मोसम्मात जयदुर्गार मृत्युर समये कीर्त्तिचन्द्रेर पितार कोनो दौहित्र मातार गर्भे ना थाके, किम्वा जन्म ना हइया थाके, ए प्रकारे कीर्त्तिचन्द्रेर भग्नि अर्थात् मोसम्मात पूर्णिमा, ये कीर्त्तिचन्द्रेर पितार दौहित्रगणेर जन्माइवार आकरआछे, पूत्र जन्मान पर्य्यन्त कीर्त्तिचन्द्रेर विषयेते दखलिकार थाकिवेक। एमते कीर्त्तिचन्द्रेर त्याज्य वस्तुर उत्तराधिकारित्य. याहा व्रजनाथके अर्शियाछिल, ताहा उक्त मोसम्मातके अर्शे, ओ ताहार स्वामिके अर्शे ना। यद्यपि चूडान्त हुकुम हओनेर पूर्व्वे शास्त्रेर आज्ञा आपीलाण्ट मोसम्मात पूर्णिमार एजहार यथार्थेर निमित्ते बोध करण उचित हइल, ए कारण हुकुम हइल ये एइ रोवकारिर नकल पूर्व्वेर व्यवस्थार सम्वलित एइ हुकुमे ये छओयालेर जओयाव ये कीर्त्तिचन्द्रेर त्याज्य वस्तु, याहा व्रजनाथके अर्शियाछिल, ताहा ताहार माता मोसम्मात पूर्णिमा, ये ताहार स्वामि वर्त्तमान एवं आर पुत्र हओनेर आस्वास राखे अर्शिवेक, कि व्रजनाथेर पिता गौरमोहनचट्टोपाध्यायके, दुइ दिवसेर मध्ये लेखेन, एइ आदालतेर पण्डितके समापन करा जाय। आर व्यवस्था दाखिल हओनेर पर व्रजनाथेर पिता ओ माता गौरमोहनचट्टोपाध्याय ओ पूर्णिमार दरखास्तसकलेर लिखित विषयेते एवं रेष्पाडेण्ट भैरवचन्द्रचौधुरिर ओ ताहार दाखिल करा व्यवस्थार पर विवेचना करा जाइवेक इति।

## श्रीज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतरिचार्डओयालपोलसाहेवधर्म्माधिकरणलिखितैतदब्दीयापरेलमासीयपञ्चविंशतिदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रमेवं तत्समर्पितप्राचीनव्यवस्थाद्वयञ्च यदेतदब्दीयमैमासीयैकादशदिनसम्बन्धिशनिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

कीर्तिचन्द्रत्यक्तधनं यदुत्तराधिकारित्वेन व्रजनाथेन प्राप्तं तत्र तन्मातुः पूर्णिमायाः सधवायाः पुत्रान्तरसम्भावनायामर्थान्मूलभूतधनस्वामिनः कीर्तिचन्द्रस्य पितुः कृष्णचन्द्रस्य दौहित्रान्तरसम्भावनायां सत्यां तेषां स्वत्वरक्षणान्यथानुपपत्त्या स्वपुत्रस्य व्रजनाथस्योत्पत्तेः प्रागिव तन्मरणानन्तरं स्वपुत्रान्तरोत्पत्तेः प्राक्कालपर्य्यन्तमधिकारः। कीर्तिचन्द्रपितृदौहित्रान्तरसम्भावनायां सत्यां व्रजनाथस्य पितुर्गौरमोहनचट्टोपाध्यायस्य नाधिकारः।

मूलभूतधनस्वामिनः कीर्तिचन्द्रस्य त्यक्तधने उत्तराधिकारित्वेन तत्पितृदौहित्रस्य व्रजनाथस्यैकस्याधिकारे जाते सत्येतद्विवादविषयनिविष्टप्रथमव्यवस्थानुसारेण पुनरुत्पत्स्यमानानां तद्भ्रात्रन्तराणामर्थात् कीर्तिचन्द्रपितृदौहित्रान्तराणामप्यधिकारस्समान एव भविष्यति। अत एव यावत्कालपर्य्यन्तं कीर्तिचन्द्रस्योत्तराधिकारिणां तत्पितृदौहित्राणामुत्पत्तिसम्भावनाराहित्यं न भवति तावत्कालपर्य्यन्तं कीर्तिचन्द्रत्यक्तधने तत्पितृदौहित्रस्य व्रजनाथस्यैकस्य कियत्परिमितोऽशो भवतीति निश्चयस्य भवितुमशक्यत्वेनेदानीं व्रजनाथस्य पितुर्गौरमोहनचट्टोपाध्यायस्य व्रजनाथत्यक्तकियत्परिमितांशे अधिकारा भवतीति निश्चयस्य भवितुमशक्यत्वात्—इति वङ्गदेशचलितप्रथमव्यवस्थालिखितग्रन्थानुसारिणी व्यवस्था—

अत्र प्रमाणानि—

प्रथमव्यवस्थालिखितानि सर्व्वाण्येवेति—

एतदब्दीयमैमासीयषोडशदिनसम्बन्धिवृहस्पतिवासरे मयेयं व्यवस्था दत्तेति—

श्रीर्ज्जयतितराम्

श्रीवैद्यनाथमिश्रेण

---

२५—रोवकारी मिछिल सदर देओयानि आदालत[1] मजकुरेर हाकिम श्रीयुत रिचार्ड ओआलपुल साहेबेर बैठके। तारिख

१. आदालत आदालत—व्यप.।

२५ आपरेल इं सन १८३३ साल मोताबक वाङ्गला सन १२४० साल तारिख १४ वैशाख दिवस वृहस्पतिवार—

गोपालस्यहायेर अलि नक्योयावराय आपीलाण्ट

मोछम्मात भ गवती कोङर ओ गयरह रेष्पाडण्टान्

आपिलाण्टेर उकिल सदासुखपण्डित ओ निलवेञ्जमेन एडमेनष्टीन वेलि साहेव, मोछम्मात भगवतीकोङर रेष्पाडण्टेर तरफ हइते आपन नामेर एक केता ओकालतनामा ओ मेहनत-आनार वावत एक केता रसिद २५० टाकार एइ आदालतेर तहविलदारेर दस्तखति सम्वलित दाखिल करिया, ओ जितु-लाल रेष्पाडण्टेर उकिल मुनशी फकिर महम्मद हाजिर आइलेन। एइ मासेर १० तारिखे एइ मोकद्दमा आमार वैठके रोवकार हइया नालिसि आरजि ओ गयरह प्रविनशीयान क्रोटेर कागजात १७४ लम्वर पर्य्यन्त पडा हइया दिवावसान प्रयुक्त मुलतवि छिल। अद्य पुनुराय रोवकार एवं प्रविनशीयान क्रोटेर वाकी कागजात फयछला पर्य्यन्त ओ एइ आदालतेर कागजात दृष्टे आइल वोध हइल ये आपीलाण्ट सावेक मुदाइ विवादीय ग्रामसकलेर दखल पाओनेर दाविते एइ एजहारे नालिश करे ये वायवायान छलतुण्डसिंह, ये सन्तानादि राखितो ना, आपन सहोदर भ्राता वाय छलतुण्डसिंहेर कन्या मोछम्मात राधामोहनकोङरके छलतुण्डसिंहेर अनुमतिमते आपन सन्ताने आनिया प्रतिपालन करिया, छलतुण्डसिंह मजकुरके कहिलेक ये आमि राधामोहनकोङरेर विवाह ओ कन्यादान करिवो, कन्या मजकुरेर गर्भे प्रथम ये पुत्र सन्तान हइवेक आमार विषयेर मालिक ओ पिण्डाधिकारि हइवेक। ताहार जओयावे छलतुण्डसिंह एकरार करिल आर उहाके अनुमति दिल ये कन्या मजकुरेर विवाह ओ कन्यादान करे; कन्या मजकुरेर प्रथम सन्तान आमार ओ तोमार विषयेर ओ मालामालेर मालिक ओ पिण्डाधिकारि हइवेक। तदनुसारे

कन्यादान करिल। नओयावरायेर पिता पेयारिलालेर अनुमति ओ अभिप्राय मते उपरेर लिखित विषये कन्यार विवाह नओयावरायेर सहित देओ याइया पुरोहित ओ गयरहर सन्मुखे कुशो आर गङ्गाजलेर सहित कन्यादान एवं पुत्रिकापुत्रेर वचने संकल्प करिल। ये प्रकार राधामोहनकोङरेर पुत्र गोपालस्यहायेर जन्म हओनेर पर चूडाकरण ओ कर्णभेद ओ गयरह दाँडासकल आमले आनिया मृत्यु हइल। मोछम्मात भगवतीकोङर आसामी फैरादिर दावि ओ एजहार अस्वीकार एवं कलतुण्डसिंहेर रायब्रजराजसिंहके पुष्यपुत्र ओ कर्त्तापुत्र करण एवं ताहार दस्तावेज उहाके लिखिया देओन आर ब्रजराजसिंह मजकुरेर शास्त्रानुसारे कलतुण्ड सिंह मोतओफ्फार क्रिया ओ कर्म्म करण सम्बलित जओयाव देय। विचारकालिन मुद्दाइर दावि डिशमिष हय इति॥ यदि स्यात् चूडान्त हुकुम हओनेर पूर्व्वे शास्त्रेर आज्ञा कलतुण्डसिंहेर गोपालस्यहार पुत्रिकापुत्र ओ व्रजराजसिंह पुष्यपुत्र ओ कर्त्तापुत्र हओनेर विषये वोध करण उचित हइल। एजन्य हुकुम हइल ये एइ रोवकारिर नकल ओ आपीलाण्टेर साक्षीगणेर एजहार ओ व्रजराजसिंहेर कर्त्तापुत्रेर ओ सन्तानेर दस्तावेज सम्बलित एइ हुकुमे एइ आदालतेर पण्डितके समापन करा जाय ये निचेर लिखित छओयाल सकलेर जओयाव पश्चिम देश प्रचलित शास्त्रानुसारे एक सप्ताह मध्ये, यतो शीघ्र हइते पारे, लिखेन।

१—प्रथम—एइ ये एइ चणकार समय अर्थात् कलियुगे निःसन्तान व्यक्तिर आपन सहोदर भ्रातार कन्याके सन्तानत्वेते लओन यथार्थ हय कि ना।

२—द्वितीय—एइ ये यदि स्यात् आपीलाण्ट ओ उहार साक्षीगणेर एजहार छलतुण्डसिंहेर कन्या राधामोहनकोङरके कलतुण्डसिंह आपन सन्तानत्वेते लओनेर विषये ओ कन्यादान ओ पुत्रिकापुत्रेर कथा, उभयत कलतुण्डसिंह ओ छलतुण्डसिंह

ओ नओयावरायेर पिता पेयारिलालेर सहित स्थिर हओने ताहार दाँडासकल आमले आना, याहा मुर्द्दाआलेहेर अन्य २ साक्षीगण हइते ओ मुर्द्दाइर साक्षीगणेर एजहारे ऐ विषये सत्वंता करे, कलतुण्डसिंहेर पुत्रिकापुत्र गोपालस्यहाय हइल कि ना।

३—तृतीय—एइ ये यदि स्यात् गोपालस्यहाय पुत्रिकापुत्र हओने उक्त व्यक्ति कलतुण्डसिंहेर त्याज्य वस्तुर मालिक ओ पिण्डाधिकारि हइवेक कि उहार स्त्री भगवतीकोङर।

४—चतुर्थ—एइ ये व्रजराजसिंहके कर्त्ता पुत्र करण ओ सन्तानेते लओन, ये से आपन पितार ज्येष्ठ पुत्र ओ ताहार वयक्रम ३० वत्सरेर अधिक एवं कयेक सन्तान आछे, उचित। किम्वा ताहार सत्वंताते उक्त व्यक्तिर पिता मातार अनुमति ओ वयक्रमेर निर्द्धार्य्य एवं आत्मवर्गेर ओ हाकिमेर गोचरेर नियम आछे।

५—पञ्चम—एइ ये यद्यपि व्रजराजसिंह कर्त्तापुत्रेर पर आपन आसल पिता ओ मातार श्राद्ध ओ क्रियाकर्म्म करिया ताहारदिगेर त्याज्य वस्तुर दखलिकार हइया थाके, तवे ताहार कर्त्तापुत्रता यथार्थ ओ वहाल थाकिवेक कि ना।

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतरिचार्डओआलपोलसाहेवधर्म्माधिकरणलिखितैतदब्दीयापरेलमासीयपञ्चविंशतितमदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रमेवं तत्समर्पितार्थिसद्दियुपस्थापितवृत्तान्तपत्राणि व्रजराजसिंहस्य कृत्रिमपुत्रविषयकपत्रञ्च यदेतदब्दीयमैमासीयैकादशदिनसम्बन्धिशनिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रथमप्रश्नस्योत्तरम्—

कलियुगे निस्सन्तानेन व्यक्तिविशेषेण स्वकीयसहोदरभ्रातृकन्यायाः सन्तानत्वेनार्थात् कन्यात्वेन ग्रहणं धर्म्मशास्त्रानुसारेण न सिद्ध्यति, धर्म्मः

शास्त्रे तादृशविध्यभावात्, अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः—
इति विधेरेव धर्म्मशास्त्रीयत्वादिति—

तत्र प्रमाणम् ।

अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः ।

पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनाय च ॥ इति दत्तकमीमांसादत्तकचन्द्रिकादिग्रन्थधृतमनुवचनम्[1] ॥१॥

द्वितीयप्रश्नस्योत्तरम्—

यद्यप्यर्थिनस्तन्निर्द्दिष्टसाद्युपस्थापितवृत्तान्तेन च सिलमन्तसिंहस्य कन्याया राधामोहनकोमराख्यायाः कुलमन्तसिंहेन स्वसन्तानत्वानयनविषये कन्यादानपुत्रिकापुत्रविषये चोभयोः कुलमन्तसिंहसिलमन्तसिंहयोः नवावरायपित्रा प्यारीलालेन सह स्थिरीकरणं तस्य रीतिसमुदायस्य भवनं यत्प्रत्यर्थिनोऽन्यसाक्षिगणैरर्थिसाक्षिसाद्येण च सत्यत्वमाप्नोति तथापि गोपालसहायः कुलमन्तसिंहस्य पुत्रिकापुत्रो न जातः एतादृशपुत्रिकापुत्रस्य शास्त्रालिखितत्वात्, औरसदत्तकृत्रिमपुत्रातिरिक्तपुत्राणां कलियुगे विशेषतः शास्त्रनिषिद्धत्वाच्च । एवञ्च सति कुलमन्तसिंहस्य पत्नी भगवती कोमराख्या एव तत्त्यक्तधने अधिकारिणी भवतीति तृतीयप्रश्नस्योत्तरमप्यर्थादत्रैव पर्य्यवसन्नमिति पृथङ् न लिखितमिति ।—

अत्र प्रमाणम्—

अनेकधाकृताः पुत्रा ऋषिभिर्य्यैः पुरातनैः ।

न शक्यास्तेऽधुना कर्त्तुं शक्तिहीनतया नरैः[2] ॥ इति दत्तकमीमांसादत्तकचन्द्रिकादिग्रन्थधृतबृहस्पति(पृ० २०७)वचनम् ॥१॥

दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।

इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्म्मनीषिणः ॥ इति दत्तकमीमांसादत्तकचन्द्रिकाव्यवहारमयूखमिताक्षराटीकादिग्रन्थधृतशौनकवचनम् ॥२॥

दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रह इति च शौनकेन पुत्रान्तरनिषे-

---

१. वचनमिदं मनुस्मृतौ नोपलभ्यते । २ शक्तिहीनैर्थिरन्तनैरिति बृस्मृ० पाठः ।

टाका मूल्येर इष्टाम्पेर पर छायेलेर दरखास्त मौजे भजापट्टीर अर्द्धेक ओ मौजे नओरङ्गावादेर मोछल्लमेर चारि आना ओ मौजे नोमा औ मौजे दिखि ओ गायरहर मोट सोल आनार वारो आना हिश्यार दखल पाइवार ओ हकीयतेर तजविजेर ओ कालेकट्टरिर केतावे नाम लेखाइवार मोकर्द्दमाय जमा रुलेर तिन गुण ओ वयमेन्यादिर टाका मुवलगे एक हाजार दुइ सत शात्तशष्टी टाका साढे दश आनार संख्याय खास आपिल मञ्जुर हओनेर प्रार्थनाय उकिल मजकुरेर नामेर उकालतनामा ओ सन १८३३ सालेर ८ जुलाइ तारिखेर लिखित तेरहोत जेलार सदर आमिनेर तजविज करा एक केता डिगरिर नकल ओ सन १८३५ सालेर २० आगष्ट तारिखेर ऐ जेलार जजसाहेवेर एक केता फयशलार नकल ओ सन १८१६ सालेर ३० जुलाएर लेखा जेला मजकुरेर रेजष्टर साहेवेर एक केता फयसालार नकल ओ सन १८१६ सालेर २३ जुलाइयेर प्रकाश हओा तेरहोत जेलार आदालतेर पण्डितेर एक केता व्यवस्थार नकल सम्वलित, ये एइ मासेर प्रथम दिवसे दाखिल हइयाछिल, अद्य दरपेष हइया दृष्टे आइल। कोन हुकुम प्रकाश हओनेर पूर्व्व शास्त्रेर विवरण ज्ञात हओा उचित वोध हइल। ए कारण हुकुम हइल ये एइ रोवकारिर नकल एइ हुकुमे ये निचेर लिखित विशयेर प्रत्युत्तर नकल रोवकारि प्राप्तेर दिवसावधि पञ्चम दिवसेर मध्ये लेखेन—ए आदालतेर पण्डितके अर्पन करा जाय ।

प्रश्नः—यद्यपि स्यात् तेरहोत जेला निवासीय दुइ व्यक्ति हिन्दु पैतृक विशयेर पर साधारणे दखलीकार ओ उहारा देनादार, एवं उभयेर अप्राप्तव्यवहार पुत्रगण थाके, आर एमन कोन विशय उहादिगेर ना थाके जे ताहा हइते उहादिगेर देनार टाका परिशोध हइते पारे ओ उहारा अनुपाये पैतृक विशय अप्राप्त-व्यवहार पुत्रगण थाकितेओ आपन २ महाजनेर देना परिशोधार्थे[१]

१—परिशोधार्थं-व्यप० ।

विक्रय अथवा तमलीक करे, तवे ऐ विक्रय ओ तमलीक पश्चिम-देशीय चलित शास्त्रानुसारे सिद्ध वटे कि ना इति ।

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतओलियमवेराडीनसाहेवधर्म्माधिकरण-लिखितेशवोशब्दप्रतिपाद्येषुगुणगजेन्दुमिताब्दीयदिशम्वरमासीयरसेन्दुमित-दिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयतन्मासीयवेदपक्षमित-दिनसम्बन्धिवृहस्पतिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनु-सारेणोत्तरं लिख्यते—

प्रभुसमर्पितप्रश्नलिखितवृत्तान्ते सत्येतादृशविक्रयस्तमलिकशब्दप्रति-पाद्यं च शास्त्रानुसारेण सिद्ध्यति—इति पश्चिमदेशचलितमनुमिताक्षरा-प्रभृतिग्रन्थानुसारिणी व्यवस्थेति ॥ —

अत्र प्रमाणम्—

*अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु चानुज्ञानादावसमर्थेषु भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सर्व्वकुटुम्बव्यापिन्यामापदि तत्पोषणे चावश्य-कर्त्तव्येषु च पित्रादिश्राद्धादिषु स्थावरस्य दानाधमनविक्रयमेकोऽपि समर्थः कुर्य्याद्*—इति मिताक्षरा( पृ० २०० )ग्रन्थलिखनम् ॥१॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयफित्रवरीमासीयैकादश-दिनसम्बन्धिवृहस्पतिवासरे मया प्रभुसमर्पितविचारपत्रसहितेयं व्यवस्था दत्तेति ॥—

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

---

( ८६ ) प्रथम प्रश्नः—

यदि कोनो व्यक्ति दुइ स्त्री राखिया लोकान्तर हय, आर ताहार ज्येष्ठा स्त्री अवीरा, कनिष्ठा स्त्रीर गर्भजातक कन्यार एक पुत्र अर्थात् मृता व्यक्तिर दौहित्र सन्तान थाके, तवे एतद्देशीय चलित शास्त्रसम्मत उत्तराधिकारि के हइते पारे ?

द्वितीय प्रश्नः—

यद्यपि एतद्देशीय चलित शास्त्रानुसारे दौहित्र सन्तान उत्तराधिकारि हय, तवे ऐ ज्येष्ठा अवीरा स्त्रीर जीवनावधि भरण-पोषणार्थेर कि हइते पारे। सन १८३५ साल तारिख २७ जुलाइ मो० सन १२४२साल तारिख १२श्रावण।

## श्रीर्ज्जयतितराम्

प्रभुसमर्पितप्रश्नपत्रं विचारपत्रद्वयं च यदीशवीशब्दप्रतिपाद्येषुगुण-गजेन्दुमिताब्दीयसितम्बरमासीयशिवनेत्रमितदिनसम्बन्धिगुरुवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते।

प्रथमप्रश्नस्योत्तरम्—

प्रथमप्रश्नलिखितवृत्तान्ते सति मृतस्य धनिनो द्वे पत्न्यौ जीवन्त्यौ चेत्तदा द्वयोः पत्न्योरेव मृतस्य धनिनस्त्यक्तस्थावरास्थावरसमुदायधने यावज्जीवं समानाधिकारः। तयोर्द्वयोः पत्न्योर्म्मध्ये एका चेज्जीवन्ती, तदा केवलं तस्या जीवन्त्या एव यावज्जीवं मृतधनित्यक्तसमुदायधनेऽधिकारः। जीवन्त्योर्द्वयोः पत्न्योर्जीवन्त्यां वैकस्यां पत्न्यां मृतधनिदुहितुर्दौहित्रस्य वा मृतधनित्यक्त-धने नाधिकारः इति।

द्वितीयप्रश्नस्योत्तरमप्यर्थादत्रैवपर्य्यवसन्नमिति पृथङ् न लिखितम्— इति वङ्गदेशचलितमनुदायभागादिग्रन्थानुसारिणी व्यवस्थेति॥

अत्र प्रमाणम्—

*पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा*—इत्यादि दायभागादिग्रन्थधृत-याज्ञवल्क्यवचनम्॥१॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयफेवरवरीमासीयगजेन्दुमित-दिनसम्बन्धिबृहस्पतिवासरे मया प्रभुसमर्पितप्रश्नपत्रविचारपत्रैः सहितेयं व्यवस्था दत्तेति।

श्रीर्ज्जयतितराम्

श्रीवैद्यनाथमिश्रेण

---

(८७)—मोकाम कलिकातार सदर देओयानि आदालतेर इ० सन १८३५ सालेर १४ जुलाइ मोतावक वाङ्गला सन १२४२ सालेर ३१आषाढ मङ्गलवार दिवसेर ऐ आदालतेर हाकिम श्रीयुत ओलियम ब्राडीन साहेवेर वैठकेर रोवकारि—

गोलोकनारायणराय छाएल

छाएलेर उकिल सदासुखपण्डित हाजीर आइल। छाएलेर छओोलात ओ ताहार सम्वलित कागजात, जे ए आदालतेर सावेक हाकिम रिचार्ड ओआलपोल साहेवेर वैठकेर मोतालक छिल, अद्य आमार वैठके दरपेष हइया पाठ करा गेल। कोन हुकुम देओनेर पूर्व्व निचेर लिखित विषयेर प्रत्युतर ए आदालतेर पण्डितेर स्थाने लओा उचित वोध हइल, ए कारण हुकुम हइल जे एइ रोवकारिर नकल एइ हुकुमे जे निचेर लिखित विशयेर प्रत्युत्तर रोवकारि प्राप्तेर दिवसावधि पञ्च दिवसेर मध्ये लेखेन-ए आदालतेर पण्डितके अर्पन करा जाय। एइ हेतु जे श्रीमती तारिणी किछु टाका मृत कालीप्रसादरायेर पुत्रगण श्यामसुन्दर देओ प्रभृतिर स्थाने कर्ज्ज लय, ओ शेष ताहा परिशोध ना हओने ऐ श्यामसुन्दर प्रभृति आदालतेर डिगरि ऐ श्रीमतीतारिणीदेव्यार नामे हाशील करिया चारि पाच वत्सर पर्य्यन्त, जे ऐ श्रीमती जीवद्दशाय छिल, ताहा जारि ना करिया उहार मृत्युर पर डिगरि जारिर दरखास्त छाएलेर नामे जे उत्तराधिकारि हेतुते मोट परगने भओोलेर नय आनार मध्ये तिन आना ऐ श्रीमतीर तेज्य अंशेर पर दखलीकार हइयाछिल, जेलार आदालते गुजराय, ओ छाएल आपत्य करे जे ऐ श्रीमतीर स्वकीय ऋनेर टाकार जओ व देओन आमार पर नाइ। ए जन्य जिज्ञाशा करा जाइते-छे जे वङ्गदेशीय चलितशास्त्रानुसारे ऐ श्रीमतीर देना परिशोध करा छाएलके उचित हय कि ना—इति।—

## श्रीर्ज्जयतितराम्

प्रभुसमर्पितेशवीशब्दप्रतिपाद्येषुगुणगजेन्दुमिताब्दीयजुलाइमासीयवे-

देन्दुमितदिवसीयविचारपत्रं तत्प्रतिरूपसहितं च तदब्दीयागस्तिमासीय-दिङ्मितदिनसम्बन्धिचन्द्रवासरे मया व्यवस्थालिखनार्थं प्राप्तम्। किन्तु तद्विचारपत्रान्मृततारिणीदेवीत्यक्तं धनं तस्याः स्त्रीधनमासीत्, तत्पति-पुत्रादिपरित्यक्तं वा तत्संक्रान्तमासीदिति, किं वा तारिणीदेव्या एतद्दानं किमर्थं कृतमिति, तारिणीदेव्या सहैतद्धर्माधिकरणार्थिनः कः सम्बन्धः इति च त्रितयं ज्ञातुं न शक्यते। तत्त्रितयज्ञानं विना प्रभोराज्ञापितव्यवस्था भवितुं न शक्नोतीति। अतो निवेदयामि। यथा आज्ञा तथा कर्तव्यमिति निवेदनमिति।

ईशवीशब्दप्रतिपाद्येषुगुणगजेन्दुमिताब्दीयदिशम्बरमासीयगुणपक्षमित-दिनसम्बन्धिबुधवासरे मयैतन्निवेदनं कृतमिति॥

श्रीर्ज्जयतितराम्

प्रतिपाल्यतमश्रीवैद्यनाथमिश्रस्य निवेदनमिति।

---

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतओलियमवेराडीनसाहेबधर्म्माधिकरण-लिखितेशवीशब्दप्रतिपाद्येषुगुणगजेन्दुमिताब्दीयजुलाइमासीयवेदेन्दुमितदि-वसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयागस्तमासीयदङ्मित-दिनसम्बन्धिचन्द्रवासरे तत्प्रभुधर्म्माधिकरणलिखितेशवीशब्दप्रतिपाद्यरस-गुणगजेन्दुमिताब्दीयफेब्रवरीमासीयवसुमितदिवसीयविचारपत्रान्तरं यत्तद-ब्दीयतन्मासीयवेदपक्षमितदिनसम्बन्धिबुधवासरे च मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते––

प्रभुसमर्पितप्रश्नलिखितवृत्तान्ते सतीशवीशब्दप्रतिपाद्यरसगुणगजेन्दु-मिताब्दीयफेब्रवरीमासीयवसुमितदिवसीयप्रभुकृतविचारपत्रदृष्ट्या च तारि-णीदेवीकृतदानपरिशोधनमर्थिना शास्त्रानुसारेण कर्त्तुमुचितं न भवति–इति वङ्गदेशचलितमनुदायभागादिग्रन्थानुसारिणी व्यवस्थेति।

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयफेब्ररवरीमासीयाङ्कपक्षमितदिनसम्बन्धिचन्द्रवासरे मया प्रभुसमर्पितविचारपत्रसहितेयं व्यवस्था दत्तेति।

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

---

## श्रीर्ज्जयतितराम्

प्रभुकृताज्ञानुसारेण निवेद्यते—

प्रभुसमर्पितेशवीशब्दप्रतिपाद्येषुगुणगजेन्दुमिताब्दीयजुलाइमासीयवेदेन्दुमितदिवसीयविचारपत्रं तदब्दीयागस्तिमासीयदिङ्मितदिनसम्बन्धिचन्द्रवासरे यद्यपि मया प्राप्तम्, किन्तु कर्म्मबाहुल्यवशात्तत्समये तदन्तर्गतप्रश्नाशयो नावगतो यदैतस्योत्तरं लेखनीयं तदैवैतस्य प्रश्नस्यार्थोऽपि सम्यग्ज्ञातव्य[1] इत्येव मनसि निधाय प्रभुसन्निधौ निवेदनं न कृतम्। एतस्मिन्नेवावसरे श्रीयुतहेनरीसिक्सिपीयरसाहेवाभिधानैतद्धर्म्माधिकरणप्राचीनाधिपतिभिराज्ञप्तं निवेदनलिखनार्थमेकमाज्ञापत्रमीशवीशब्दप्रतिपाद्येषुगुणगजेन्दुमिताब्दीयागस्तिमासीयेन्दुगुणमितदिनसम्बन्धिचन्द्रवासरे प्राप्तम्, तदनन्तरं तन्निवेदनलिखनमत्कर्त्तव्येतरेतरकार्य्यसमुदायव्यग्रेण प्रभुसमर्पितप्रश्नस्य प्रश्नान्तरजातस्य वा तत्पूर्व्वमपि प्राप्तस्योत्तरलिखने श्रीश्रीश्वरपूजार्थं धर्म्माधिकरणावकाशात् पूर्व्वमवकाशलेशोऽपि न प्राप्तः। अनन्तरं चेषुगुणमितदिनपरिमितो धर्म्माधिकरणस्यावकाशोपि श्रीश्रीश्वरपूजार्थमुपस्थितः। अत एव श्रीयुतहेनरीसिक्सिपीयरसाहेवाभिधानैतद्धर्म्माधिकरणप्राचीनाधिपतिभिराज्ञप्तं तन्निवेदनपत्रं लिखित्वेशवीशब्दप्रतिपाद्येषुगुणगजेन्दुमिताब्दीयनवम्बरमासीयरसेन्दुमितदिनसम्बन्धिचन्द्रवासरे दत्तम्। तदनन्तरं च यद्यत्प्रश्नजातं प्रभुसमर्पितप्रश्नात् पूर्व्वं परतो वा प्राप्तं तस्य तस्योत्तरलिखनप्रवृत्तेनापि यस्य व्यवस्थाजातस्य मत्कर्त्तव्येतरेतरकार्य्यस्य वा

---

१. सम्यक् ज्ञातव्यः—व्यप०।

श्रीमतां प्रभूणामेतद्धर्म्माधिकरणाधिपतीनामवान्तरधर्म्माधिकरणपतीनां वा आज्ञावशात् शीघ्रता जाता, तद्व्यवस्थाजातं प्रथमतो लिखित्वा दत्तम्, तत्तत् कर्म्मं च कृतम्। अनन्तरं प्रभुसमर्पितप्रश्नस्योत्तरलिखनप्रवृत्तेनापि यद्विषयत्रयं प्रभुसन्निधौ निवेदितं तस्य त्रितयस्य ज्ञानं प्रभुसमर्पितप्रश्नस्योत्तरलिखने अत्यावश्यकं जातम्। तस्य त्रितयस्य ज्ञानं विना प्रभुसमर्पितप्रश्नस्योत्तरं दातुमशक्तेनागत्य प्रभुसन्निधौ निवेदितमिति निवेदनमिति॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयफेवरवरीमासीयाङ्कपक्षमितदिनसम्बन्धिचन्द्रवासरे मया प्रभुसमर्पितविचारपत्रसहितमिदं निवेदनपत्रं दत्तमिति।

श्रीर्जयतितराम्

प्रतिपाल्यतमश्रीवैद्यनाथमिश्रेण

---

## श्रीदुर्गा शरणम्

(८८)—जिला कटकेर दिमानि आदालतेर सदर आमिन आलार वैठकेर सवाल। मोकाम कलिकातार सदर दिमानि आदालतेर पण्डितानेर प्रति। प्रथम सवाल एइ ये, क्रय ओ विक्रय प्रभृति मोकद्दिमार विषयेते शास्त्रेर आज्ञासकल हिन्दुजातीर मध्ये वाङ्गला ओ ओडिस्या ओ वेहार ओ तैलङ्ग ओ महाराष्ट्र देशेर एक प्रकार वटे, कि पृथक पृथक् इति।—

द्वितीय सवाल एइ ये, हिन्दुजातीर मध्ये क्रय ओ विक्रयेर स्थले क्रेता ओ विक्रेतार स्वीकार कराते क्रय विक्रय सिद्ध हय, कि मूल्येर समस्त टाका दिले सिद्ध हय, कि किञ्चित मूल्य दिले ओ निलेओ सिद्ध हय इति।—

तृतीय सओाल एइ ये, यद्यपि कोनो व्यक्ति हिन्दु जाति आपन स्त्री ओ अप्राप्त व्यवहार पुत्र विद्यमान थाकिते पैतृक कोनो स्थावर किम्वा स्वोपार्ज्जित कोनो स्थावर काहारो निकट विक्रय करे, तवे ए प्रकार विक्रय शास्त्रानुसारे सिद्ध वटे कि ना इति।—

# श्रीर्जयतितराम्

प्रभुसमर्पितप्रश्नपत्रं विचारपत्रद्वयञ्च यदीशवीशब्दप्रतिपाद्येषुगुण-गजेन्दुमिताब्दीयाकतूवरमासीयाङ्कपक्षमितदिनसम्बन्धिवृहस्पतिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रथमप्रश्नस्योत्तरम्—

हिन्दुजातीयक्रयविक्रयप्रभृतिविवादविषयकशास्त्राज्ञा वङ्गदेशे उत्कल-देशे वेहारदेशे त्रैलिङ्गदेशे महाराष्ट्रदेशे च क्वचित् क्वचित् स्थलविशेषे एकाप्यस्तीति ॥

द्वितीयप्रश्नस्योत्तरम्—

क्रयविक्रयस्थले समस्तमूल्यग्रहणपूर्व्वकक्रेतृविक्रेत्रोः स्वीकारेण विक्र-यस्य सिद्धिर्भवति । किञ्चिन्मूल्यग्रहणेन विक्रयस्य सिद्धिर्न भवतीति ।

अत्र प्रमाणम्—

*मत्तोन्मत्तेन विक्रीतं हीनमूलं भयेन वा ।*
*अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्भवेत् ॥*—इति वीरमित्रोदयादि-(पृ० ४४१)ग्रन्थधृतवृहस्पति(पृ० १५५)वचनम् ॥१॥

तृतीयप्रश्नस्योत्तरम्—

यदि केनचित् पत्न्यां विद्यमानायामप्राप्तव्यवहारेषु पुत्रेष्वपि विद्यमानेषु क्रमागतं स्वोपार्जितं वा स्थावरं शास्त्रीयावश्यककार्य्यार्थव्यतिरेकेण विक्रीतं स्यात्तदा शास्त्रानुसारेण न सिद्ध्यति, शास्त्रीयावश्यककार्य्यार्थाव्यतिरेकेण[1] विक्रीतं स्यात्तदा शास्त्रानुसारेण सिद्ध्यति—इति कटकप्रदेशचलितमनु-मिताक्षरावीरमित्रोदयादिग्रन्थानुसारिणी व्यवस्थेति ॥—

अत्र प्रमाणम्—

*मणिमुक्ताप्रवालानां सर्व्वस्यैव पिता प्रभुः ।*
*स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥*—इति मिताक्षरा प्रभृतिग्रन्थधृतयाज्ञवल्क्यवचनम् ॥१॥

---

१. कार्य्यार्थव्यतिरेकेण—व्यप० ।

*ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।*
*वृत्तिं ते ऽप्यभिकांक्षन्ति न दानं न च विक्रयः* ॥—इति मिताक्षरादि-
( पृ॰ २०० )ग्रन्थधृतमुनिवचनम् ॥२॥

*अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु चानुज्ञानादावसमर्थेषु भ्रातृषु वा तथा-विधेष्वविभक्तेष्वपि सर्व्वकुटुम्बव्यापिन्यामापदि तत्पोषणे चावश्यकर्त्तव्येषु पित्रादिश्राद्धादिषु स्थावरस्य दानाधमनविक्रयमेकोऽपि समर्थः कुर्य्याद्*—इति मिताक्षरा( पृ॰ २०० )ग्रन्थलिखनञ्चेति ॥३॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयमार्च्चमासोयदिङ्मितदिन-सम्बन्धिवृहस्पतिवासरे मया प्रभुसमर्पितप्रश्नपत्रविचारपत्रैः सहितेयं व्यवस्था दत्तेति ॥

श्रीर्ज्जयतितराम्—
श्रीवैद्यनाथमिश्रेण

———

(८९) मोकाम कलिकातार सदर देओानि आदालतेर इङ्गरेजी सन १८३६ सालेर ७ जानेर मोता(ब)के वाङ्गला सन १२४२ सालेर २४ पौष वृहस्पतिवार दिवशेर ऐ आदालतेर हाकिम श्रीयुत ओलियम ब्राडीन साहेवेर रोवकारि ।—

काशीचन्द्रमुस्तोफि छायेल—

छाएलेर उकिल शिवनारायणचट्टोपाध्याय हाजीर आइल । सन १८३५ सालेर १९ दिशम्बरेर लिखित हुगलि जेलार आदा-लतेर एक केता रिटरण तथाकार एक केता रोवकारि ओ ओछि-नामार नकल ओ गयरह ऐ रिटरणेर सम्वलित सन मजकुरेर ३१ आगष्टेर प्रकाशित ए आदालतेर हुकुमेर जओावे प्राप्त ओ अद्य दरपेष हइया छायेलेर छओाल ओ गरह ऐ छओालेर संक्रान्तेर कागजसकलेर सहित ओ ए आदालतेर पण्डितेर व्य-वस्था दृष्टे आइल । ए आदालतेर पण्डितेर व्यवस्थार लिखित हइयाछे जे यद्दि एक व्यक्ति अविरा कन्यार स्वामि-कुलेर स्वामिर भ्रातार न्याय प्रभृति जे ताहा हइते ऐ अवीरा स्त्रीर धर्म्म ओ लज्जा

मानेर रक्षणावेक्षण हइते पारे थाके, तवे आपन स्वामीर गृहे अवीरा स्त्रीर जाओन कर्त्तव्य वटे, ओ यद्यपि ऐ प्रकार ना थाके, ओ ऐ कन्यार पितृकुलेर पिता ओ भ्राता प्रभृति थाके जे ताहा-देर हइते ऐ कन्यार धर्म्म प्रभृति लज्जा मानेर रक्षणावेक्षण हइते पारे, तवे ताहा त्याग करिया कन्या मजकुरार आपन स्वामिर गृहे जाओन आविश्यक राखे ना; वरं स्वामिकुलेर एक व्यक्ति पुरुस रक्षणावेक्षणेर उपयुक्त ना थाकार सम्भवे ऐ स्त्रीर रक्षणा-पेक्षण ऐ स्त्रीर पितृकुलेर मनुष्यदिगेर पर उचित वटे। किन्तु व्य-वस्था मजकुरा श्रीमती कमलकुमारिर स्वामि मृत रमेशचन्द्रेर लिखिया देओ। ओछिनामा दिष्ट व्यतिरेक लिखित हइयाछे। ए कारण हुकुम हइल जे एइ रोवकारिर नकल ओ प्राप्त ओछिनामा एइ हुकुमे जे नकल रोवकारि प्राप्तेर दिवसावधि पञ्चदिवसेर मध्ये वङ्गदेशीय चलित शास्त्रानुसारे लेखेन जे ओछिनामा मज-कुरार दिष्टे अप्राप्तव्यवहारा श्रीमतीकमलकुमारी स्वामीर ग्रहे आपन शाशुडिर निकट थाकन आविश्यक वटे, अथवा ताहार पितार निकट थाकिते पारे—ए आदालतेर पण्डितके अर्पन करा जाय इति।

## श्रीकृष्णः शरणम्

परमपूजनीयश्रीमतीपद्माकुमारीदासी माता ठाकुराणी श्रीचर-णाम्बुजेषु।

लिखितं श्रीरमेशचन्द्रदत्तकस्य ओछियतनामापत्रमिदम्। कार्य्यनञ्चागे[१] आमि सारिरिक पीडाय अत्यन्त पीडित, एवं जीवन संशय वोध हइतेछे। अतएव एदयने आमार होष वाहाल आछे, आपन स्त्री श्रीमतीकमलकुमारीदासीके पुष्यपुत्र लओनेर अनुमति पत्र लिखिया दिया आमार पैतृक ओ सोपार्जित मनकुला ओ गएर मनकुला दोरोवस्त विषयेर

१.—कार्य्यं च। आगे-इति साधीयान् पाठः।

एवं आमार ऐ स्त्रीर ओ ताहार लओ़ा ऐ पुष्यपुत्रेर रक्षणा ओ हेफाजत कारण आपनाके ओछि मकरर करिया लिखिया दितेछि—जे आपने मालिक निचेर तपसील सकल कर्म्म करिवेन।

१ दफा। दोरवस्त एमलाक मनकुला ओ गयेर मनकुला, जे किछु आमार दखले आछे ओ जाहा आमार सरिकानेर निकट हइते वुझ समुझ करिया लइते वक्री आछे,—ताहा वुझ समुझ करिया लइया तावत विषये दखिलकार थाकिया हेफाजत कारवेण, एवं देना ओ पाओना जाहा आछे ताहा वुझ समुझ करिया दिवेन ओ लइवेन ॥—

२ दफा। नित्य-नैमित्तिक क्रिया-कलाप ओ संसारेर खरच-पत्र अर्थात परिवारेर भरण पोषणादि समय मत करिवेन ॥—

३ दफा। आमार स्त्री ओ आमार अनुमत्यानुसारे यथाशास्त्र जे पुष्यपुत्र लइवेक, ऐ पुष्यपुत्रेर एवं आमार ऐ स्त्रीर रक्षणा-पक्षन आपने करिवेन। जावत ऐ पुष्यपुत्र वयेष-प्राप्त ना हय तावत समुदाय विशय ओछि सुरत आपनकार दखलकवजे थाकिवेक। ऐ पुष्यपुत्र वयेष-प्राप्त हइले आपने ताहाके समजाइया दिवेन। यद्यपि पुष्यपुत्रेर वयेस-प्राप्त हओनेर मध्ये आपने कोन पीडाय अथवा अन्य कोन कारणे जीवन संशय वुझेन, तवे आपन परिवर्त्ते अन्य काहाके खातिर्जमा मते ओछि मकरर कारिवार एक्तेयार आपनकार थाकिल ॥—

दाफा। आमार पैतृक ओ सोपार्जित कालेकट्टरि मालगुजारि समपर्कीय ओ पत्तनि ओ दरपत्तनि तालुकात जे आछे, ताहाते आमार एलागाएत खरच-पत्रेर वाहुल्यताय ओ अन्य देना परिशोधे सन हालेर सदर मालगुजारि आदायेर अनेक असंस्थान आछे। आपने ऐ तालुकातेर मध्ये कोना एक अथवा ततोधिक तालुक पत्तन करिया दरपत्तन दिया ताहार पन वाहाय ऐ असंस्थान मालगुजारिर सरवराह करिया विषय रक्षा करिवेन। इति सन १२३७ साल तारिख ६ कार्त्तिक—

इशादी

| | |
|---|---|
| श्रीरामदत्त | श्रीवैद्यनाथमित्र |
| सां० देवानन्दपुर । | सां० हाजीपुर पं० चौमुहा । |
| श्रीगोविन्दपाल | श्रीपाँचकडिघोष |
| सां० देवानन्दपुर । | सां० गटु । |

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतश्रोलियमवेराडीनसाहेवधर्म्माधिकरण-लिखितेशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयजानवरीमासीयमुनिमित-दिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं तत्समर्पितासीयन्नामाख्यं पत्रं च यत्तदब्दीयफेवरवरीमासीयशिवमितदिनसम्बन्धिवृहस्पतिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते ॥—

प्रभुसमर्पितासीयन्नामाख्यपत्रदृष्ट्या अप्राप्तव्यवहारायाः श्रीमत्याः कमलकुमार्य्याः पतिगृहे श्वश्रूसन्निधानस्थितेः शास्त्रानुसारेणावश्यकता नास्ति स्त्रीत्वेन स्वतोऽस्वतन्त्रायाः स्त्र्यन्तररक्षकत्वस्याशास्त्रीयत्वेन तस्य पितृसन्निध(ा)ने स्थितिर्भवितुमर्हति—इति वङ्गदेशचलितमनुदायभागादि-ग्रन्थानुसारिणी व्यवस्थेति ।

अत्र प्रमाणम्—

*पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।*

*रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति* ॥—इति मनु( ९।३ )-वचनम् ॥१॥

*भर्त्ता रक्षति यौवन इत्यादि प्रायिकम्, अभर्तृपुत्रायाः सन्निहितायाः पित्रादिभिरपि रक्षणात्*—इति कुल्लूकभट्टकृतमन्वर्थमुक्तावलीग्रन्थ( पृ० २४६ )लिखनम् ॥२॥

*मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः ।*
*विनियोगात्मरक्षासु भरणे च स ईश्वरः ॥*

*परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये ।*

*तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ।।*—इति दायभागादि-(पृ० १७३।१७४ )ग्रन्थधृतनारद( १३।२८-२९ )वचनञ्चेति ।।३।।

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयापरेल मासीयेषुमितदिन-सम्बन्धिमङ्गलवासरे मया प्रभुसमर्पितविचारपत्रासीयन्नामाख्यपत्राभ्यां प्रहितेयं व्यवस्था दत्तेति ।।

श्रीर्जयतितराम्

श्रीवैद्यनाथमिश्रेण

---

( ९० )—रुवकारि मिछिल मोकाम कलिकाता सदर देओयानी आदालतेर सन १८३६ सालेर मार्च्च मासेर स्याष्टादस दिवस बुधवारे डिवड इसमिट साहेव-कायेम मोकाम हाकिमेर वैठके ।।—

जगतचन्द्रअधिकारि— साएल

साएलेर उकिल निलमनिवन्द्योपाध्याय हाजीर हइल । सन १८३५ सालेर दिजम्वर दशम दिवसेर जिला वर्द्धमानेर जज साहेवेर ओ जिलार पण्डितेर व्यवस्थानुसारे सायेलेर एवं मधूसूदनवडाल प्रतिवादिर पूर्व्वपुरुषेर स्थापित ओ प्रकाश करा श्रीश्रीश्वरठाकुर-ठाकुराणी सूद्रजाति सेवकेर दिगेर वाटिते लइया जाइवार अनुमतिते मकद्दमा निष्पत्य करियाछेन, ए कारण साएल ताहाते असम्मत हइया श्रीमन्दिर हइते ठाकुर-ठाकुराणी अन्यन्तरे लइया जाओया रहित हुकुम छादेर हओनेर प्रार्थनाय आपन सओाल आर उकिलेर नामेर ओकालतनामा ओ सन १८३५ सालेर दिजम्वरमासेर दशमदिवसेर ऐ जिला आदालतेर रुय-कारिर नकल ओ साएलेर सन १८३२ सालेर आगष्टमासेर सप्तदशदिवसेर हुकुम देओया दरखास्तर नकल आर सन १८३५ सालेर जानेओरि मासेर चतुर्द्दश दिवसेर हुकुम देओया मधुसूदन

वडाल प्रतिवादिर दरखास्तर नकल आर ओ जिला आदालतेर पण्डितेर व्यवस्थार नकल सम्वलित एइ मासेर पञ्चम दिवसे सेरेस्ताय दाखिल हइयाछिल, अद्य तारिखे दरपेस हइया पडा-गेल इति। जिला मजकुरेर जज साहेवेर गतो सनेर दिजम्वर मासेर दशम दिवसेर रुवकारि द्वाराय प्रकाश हइल जे जिलार पण्डित सदर आमिनेर काछारिते उभय विवादीर जे सकल साक्षी गुजरियाछे तदनुसारे उभय विवादीर पूर्व्व पुरुसेर रीति अनुसारे ठाकुर-ठाकुराणीजीउके ताहारदिगेर शूद्रजाति सेवकेर वाटीते लइया जाओया प्रमाण हइयाछे। एवं ओ पण्डित सदर आमिनेर व्यवस्था द्वाराते ओ ठाकुर-ठाकुराणीजिउर शूद्रसेवकेर दिगेर वाटीते गमने देवत्त हानि हओया किछु वोध हय ना। ये हेतु एक वार तथाय गमन करियाछिलेन, ए कारण साएलेर प्रति किछु हुकुम छादेर करार पूर्व्वे ए आदालतेर पण्डितेर द्वाराय एइ व्यवस्था तलव करा उचित हइल जे यदि ब्राह्मणेर प्रकाशीत ठाकुर ओ ठाकुराणीजिउ एक वार शूद्रजाति सेवकेर दिगेर वाटीते गमन करिया थाकेन, तवे पुनराय पूर्व्वेर रीति अनुसारे ठाकुर-ठाकुराणी शूद्रसेवकेरदिगेर वाटीते गमन करिते पारेन कि ना। एवं यदि गमन करेन ताहाते ताँहार-दिगेर देवत्तर किछु हानि हय कि ना। एमते हुकुम हइल जे ए आदालतेर पण्डित वङ्गदेशेर चलित शास्त्रानुसारे उपरेर लिखित वित्तान्तेर व्यवस्था पञ्च दिवसेर मध्ये दाखिल करेण। व्यवस्था दाखिल करा पर्य्यन्त सओयाल स्थकिद थाकिल इति ॥—

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिस्थानाभिषिक्तश्रीयुतडिविडइशमिटसाहेव-धर्म्माधिकरणलिखितेशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयमार्च्चमासी-यरसेन्दुमितदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयतन्मासीय-

द्विपक्षमितदिनसम्बन्धिमङ्गलवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते ॥—

ब्राह्मणजातिप्रकाशितदेवताविग्रहाभ्यामेकवारं केनचिन्निमित्तेन शूद्रजातिसेवकस्य गृहे गतं चेत्तदनुसारेण पुनरपि तन्निमित्तवशाच्छूद्रजातिसेवकस्य गृहे ताभ्यां विग्रहाभ्यां गन्तुं शक्यते। तद्धेतुवशाच्छूद्रजातिसेवकगृहगमनेन चैतादृशविग्रहयोर्देवत्वहानिर्न भवति–इति वङ्गदेशचलितमन्वादिधर्म्मशास्त्रानुसारिणी व्यवस्थेति।

अत्र प्रमाणम्—

*जातिजानपदान् धर्म्मान् श्रेणीधर्मांश्च धर्म्मवित्।*
*समीक्ष्य कुलधर्म्मांश्च स्वधर्म्मं प्रतिपालयेत्॥* इति मनुवचनम् ॥१॥
*देशजातिकुलानाञ्च ये धर्म्माः प्राक् प्रवर्त्तिताः।*
*तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा॥* इति बृहस्पतिवचनञ्चेति ॥२॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयापरेलमासीयाङ्कमितदिनसम्बन्धिशनिवासरे मया प्रभुसमर्पितविचारपत्रसहितेयं व्यवस्था दत्तेति ॥

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

———

(९१)—तरजमा सवालात—

जिला तिरहुतेर कायेम मोकाम सदर आमीन आला सैयद अवदुल ओ आहिद खान वहादुरेर वैठकेर सवाल सदर दिमानी आदालतेर पण्डितानेर प्रति ओ वाराणसेर पाठशालार पण्डितानेर प्रति—

मदारीलालेर उत्तराधिकारि रामभञ्जनसिंह आपीलाण्ट ओ तालेवरसिंह रष्पाडण्टेर मोकद्दिमाते मैथिल देशेर चलित

शास्त्रानुसारे ओ वाराणस देशेर चलित शास्त्रानुसारे ओ नदियार चलित शास्त्रानुसारे यवाव लिखेन—इति।

प्रथम सवाल—एइ ये मैथिलदेशेर चलित शास्त्रानुसारे विभागेर अर्थ कि—इति।

द्वितीय सवाल—एइ ये मैथिलदेशर चलित शास्त्रानुसारे साधारण्य कय प्रकार वटे—इति।

तृतीय सवाल—एइ ये ए प्रकार कोन साधारण्य आछे, ये हिन्दुजातिर सन्तानहीन कन्यासकलेर अधिकार पितार मृत्युर पर पितामहेर सपिण्ड विद्यमान थाकिते पितृपितामहेर त्यक्त धने हय कि ना इति।

चतुर्थ संवाल—एइ ये यद्यपि कोनो व्यक्ति आपन पितामहेर पौत्रसकलेर सहित विवाद उपस्थित करिया आपन अंशेर डिगरि आदालत हइते पाइया ओइ डिगरी अनुसारे दखिलकार हइया आपन जीवन पर्य्यन्त पृथक् पृथक् असूल तहसील करिया मरियाथाके, तवे एमत विषयेर विभाग वला याइवेक कि ना इति।

पञ्चम सवाल - एइ ये यद्यपि कोनो व्यक्ति हिन्दु आपन पितामहेरपौत्र सकलेर सहित पृथगन्व ओ कारोवार ओ दान ओ ग्रहण ओ आय ओ व्यय पृथक् पृथक् करिया ओ पितामहेर त्यक्त किञ्चित भूमि अविभक्त राखितो, ओ ओइ भ्रातासकल आपन आपन अंशेर परिमित असूल तहसील पृथक् पृथक् करितेछिलेन—ए प्रकारे ओइ पितामहेर त्यक्त स्थावर विभक्त जाना जाइवेक कि, अविभक्त जाना जाइवेक। ओ ए प्रकार साधारण्य कन्यार अनधिकारेर कारण हइते पारे कि ना इति।

षष्ठ सवाल—एइ ये यद्यपि पितामहेर पौत्रसकलेर मध्ये क्रमागत स्थावर विभक्त ना हइया थाके, ओ ओइ स्थावरेर उपस्वत्व अंशीसकल आपन आपन अंशेर अनुसारे पृथक पृथक असूल ओ तहसील करिते थाकेन—तवे ए प्रकारे ओइ स्थावर विभक्तेर मध्ये गणना हइवेक कि ना, ओ ओइ स्थावर विभक्त-

पदेर अर्थ हइवेक कि ना, ओ ओइ स्थावर विभक्त पदेर अर्थेर मध्ये गणित हइवेक कि, अविभक्त पदेर अर्थेर मध्ये गणित हइवेक इति ॥

## श्रीर्ज्जयतितराम्

प्रभुसमर्पितप्रश्नपत्रं विचारपत्रं च यदीशवीशब्दप्रतिपाद्येषुगुणगजेन्दुमताब्दीयसितस्वरमासीयगजेन्दुमितदिनसम्बन्धिभृगुवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रथमप्रश्नस्योत्तरम्—

द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तत्तदेकदेशे प्रादेशिकस्वत्वव्यवस्थापनं मिथिलादेशचलितशास्त्रानुसारेण विभाग इति ।

अत्र प्रमाणम्—

*विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तत्तदेकदेशेषु व्यवस्थापनम्*— इति मिताक्षरा( पृ० १९७ )ग्रन्थलिखनम् ॥१॥

*विभागशब्दस्त्वनेकस्वाम्यानां द्रव्यसमुदायविषयाणां तत्तदेकदेशे व्यवस्थापने शक्तः*—इति वीरमित्रोदयादि( वी॰ मि॰ पृ० ५२२ )ग्रन्थलिखनम् ॥२॥

*एकदेशोपात्तस्यैव गोभूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः*—इति दायभाग( पृ० ८ )ग्रन्थलिखनम् ॥३॥

द्वितीयप्रश्नस्योत्तरम्—

मिथिलादेशचलितशास्त्रानुसारेण साधारण्यमनेकविधमस्ति । तत् सर्वमधोलिखितवचनजातेष्वेव स्पष्टमिति ॥

अत्र प्रमाणम्—

*दानग्रहणपशवन्नगृहक्षेत्रपरिग्रहाः ।*
*विभक्तानां पृथग् ज्ञेयाः पाकधर्मागमव्ययाः ॥*— इति विवादरत्नाकर( पृ० ६०६ )विवादचिन्तामणि( पृ० २५३ )विवादचन्द्र( पृ० ८७ ) मिताक्षरावीरमित्रोदय( पृ० ७१६ )दायभाग( पृ० २३० )दायतत्त्व( पृ०

१७९ )विवादार्णवसेतु( पृ० ८३ )विवादभङ्गार्णवादिग्रन्थधृतनारद( नाम· सं० पृ० १५६) वचनम् ॥१॥

*साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च।*

*विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः कथञ्चन* ॥—इति तत्तद्ग्रन्थधृत-नारद( नामस० पृ० १५६ )वचनम् ॥२॥

*येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थतः।*

*विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्* ॥ इति तत्तद्ग्रन्थधृतनारद-( नामस० पृ० १५७ )वचनम् ॥३॥

तृतीयप्रश्नस्योत्तरम्—

मृते पितरि विद्यमानेषु पितामहसपिण्डेषु पितृपितामहत्यक्तधने येन साधारण्येन सन्तानरहितदुहितॄणामधिकारो न भवति, तत्साधारण्यञ्च भ्रातॄणां पितृव्यभ्रातृपुत्रादीनां वा सपिण्डानां परस्परमविभक्तधनाना-मेकपाकेन वसतामेकत्र पितृदेवद्विजार्च्चनमायव्ययादिकमपि कुर्वतां परस्पर-मृणप्रातिभाव्यसाक्ष्यादिकमप्य(पा)कुर्व्वतां[1] तत्तत्कर्म्मजातमेवेति।

अत्र प्रमाणम्—

द्वितीयप्रश्नोत्तरलिखितप्रमाणत्रयमेवेति।

चतुर्थप्रश्नस्योत्तरम्—

चतुर्थप्रश्नलिखितवृत्तान्ते सत्येतादृशं धनं विभक्तमध्ये गणितं भवितुं शक्नोतीति।

अत्र प्रमाणम्—

प्रथमप्रश्नोत्तरलिखितप्रमाणत्रयमेवेति।

पञ्चमप्रश्नस्योत्तरम्—

पञ्चमप्रश्नलिखितवृत्तान्ते सत्येतत्प्रश्नलिखितपितामहत्यक्तं स्थावरं धनं विभक्तमध्ये गणितं भवितुं शक्नोति, एतादृशसाधारण्यञ्च कन्यान-धिकारप्रयोजकं भवितुं न शक्नोतीति।

अत्र प्रमाणम्—

प्रथमप्रश्नोत्तरलिखितप्रमाणत्रयमेवेति॥

१. °मप्यकुर्व्वताम्—व्यप०।

षष्ठप्रश्नस्योत्तरम्—

षष्ठप्रश्नलिखितवृत्तान्ते सत्येतादृशं स्थावरं विभक्तमध्ये गणितं भविष्यति, एतादृशं स्थावरं विभक्तपदवाच्यं भविष्यत्येतादृशं स्थावरं विभक्तपदार्थान्तर्गतञ्च भवति ॥—इति मिथिलादेशचलितमनुविवादरत्नाकरविवादचिन्तामणिकल्पतरुपारिजातविवादचन्द्रप्रभृतिग्रन्थानुसारिणी वाराणसीप्रदेशचलितमिताक्षरावीरमित्रोदयव्यवहारमयूखव्यवहारमाधवव्यवहारकौस्तुभादिग्रन्थानुसारिणी नदियाप्रदेशचलितदायभागदायतत्त्वदायक्रमसंग्रहविवादार्णवसेतुविवादभङ्गार्णवादिग्रन्थानुसारिणी च व्यवस्थेति ।

अत्र प्रमाणम्—

प्रथमप्रश्नोत्तरलिखितप्रमाणत्रयमेवेति ।

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयापरेलमासीयरसेन्दुमितदिनसम्बन्धिशनिवासरे मया प्रभुसमर्पितप्रश्नपत्रविचारपत्राभ्यां सहितेयं व्यवस्था दत्तेति ॥

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

———

१०१ लं जारि—

( ९२ )—जेला चव्विस परगनार मोतालक चौकि नवावगञ्जेर मोनछफी काछारि हइते सदर देमानि आदालतेर श्रीयुत पण्डितेर निकट व्यवस्थाकारण सओल पाठान जाय ।

श्रीमतीपार्व्वतीदासी साकिन नैहाटी प० हाविलीसहर—
डिगरिदार

श्रीमतीठाकुराणीदासी ओ रामनारायणमित्र— देनदार

कालीप्रसादमित्र ओ वेनिमाधवमित्र ओ मधुसूदनमित्र—

नावालगदिगेर माता श्रीमतीकरुणामयीदासी—मोजाहेम ।

गोविन्दचन्द्रमित्र सा० नैहाटी प० कलिकाता—
दोषरा मोजाहेम

दा० २७३॥।.॥ टाका माय खरचा—

यद्यपि कमललोचनदे आपन स्थावर ओ अस्थावर विषये ओ आपन स्त्री श्रीमतीठाकुराणीदासी ओ दुइ कन्या श्रीमती-करुणामयीदासी ओ आनन्दमयीके राखिया परलोक हय आर करुणामयीदासीर गर्भजातक सन्तान श्रीयुतमधुसूदनमित्र ओ वेनिमाधवमित्र ओ कालीदासमित्र नावालग वर्त्तमान थाके— एमत दशाय ऐ करुणामयीर माता श्रीमतीठाकुराणी कमललोचन-देर स्त्री ऐ करुणामयीर स्वामी रामनारायनमित्रेर सम्वलित कमललोचन मजकुरेर खरिदा ब्रह्मोत्तर ॥१ जमि वन्धकेर द्वाराय टाका कर्ज्ज लइया थाके, आर डिगरि हओनेर पर डिगरि जारिर द्वाराय अविनामार लिखित जमि ऐ कमललोचनेर त्यागी वस्तु क्रोक हइया थाके, तवे कमललोचनदेर दौहित्र लोक थाकिते ताहार त्यागी वस्तु ऐ ठाकुराणीदासी ओ रामनारायण मजकुरेर देनाय विक्री हइते पारे कि ना। यदि ठाकुराणी मजकुरा ऐ टाका आपन निज खरच किम्वा आपन स्वामीर गयातीर्थे पिण्डदान किम्वा आपन द्वितीय कन्यार विवाहेर कारण लइया थाके—एमत तृतीय हेतुते कमललोचन मजकुरेर त्यागी वस्तु हइते ठाकुराणीदासीर देना परिशोध हइते पारे कि ना इति।

## श्रीर्ज्जयतितराम्

प्रभुसमर्पितप्रश्नपत्रं विचारपत्रं च यदीशवीशब्दप्रतिपाद्येषुगुणगजेन्दु-मिताब्दीयदिशम्बरमासीयगुणपक्षमितदिनसम्बन्धिबुधवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रश्नलिखितवृत्तान्ते सति मृतस्य मूलधनिनः कमललोचनदेनाम्नो दौहित्रेषु विद्यमानेषु कमललोचनत्यक्तधने पत्नीत्वेन जाताधिकारया ठाकुराणीदास्या मृतधनिपत्न्या प्रश्नलिखिततदृणं यदि शास्त्रीयावश्यक-कार्य्यार्थव्यतिरेकेणार्थात् स्वेच्छया स्वाभिप्रायेण वा कृतं स्यात्तदा तदृण-परिशोधनार्थं कमललोचनत्यक्तधनस्य विक्रयो भवितुं न शक्नोति; यदि

च ठाकुराणीदासी तदेव ऋणं शास्त्रीयावश्यककार्य्यार्थमर्थात् स्वकीयभरण-पोषणाद्यर्थं स्वपत्युः श्राद्धाद्यर्थं द्वितीयकन्याविवाहाद्यर्थं वा कृतवती स्यात्तदा कमललोचनत्यक्तधनात् ठाकुराणीदासीकृतर्णपरिशोधनं भवितुं शक्नोति—इति वङ्गदेशचलितमनुदायभागादिग्रन्थानुसारिणी व्यवस्थेति ॥—

अत्र प्रमाणम्—

पत्नी दुहितरश्चैव—इत्यादि दायभागादिग्रन्थधृतयाज्ञवल्क्यवचनम् ॥१॥

*अपुत्रा शयनं भर्त्तुः पालयन्ती गुरौ स्थिता ।*

*भुञ्जीतामरणात् क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः ॥* इति दायभागादिग्रन्थधृतकात्यायनवचनम् ॥२॥

*भर्त्तुरौर्ध्वदेहिकक्रियाद्यर्थं दानादिकमप्यनुमतमिति । वर्त्तनाशक्तावाधानमप्यनुमतम् । तत्राप्यशक्तौ विक्रयणमपीति* च—दायभागग्रन्थलिखनम् ॥३॥

*कन्या वैवाहिकञ्चैव प्रेतकार्य्येषु यत् कृतम् ।*

*एतत् सर्व्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥* इति व्यवहारतत्त्वादिग्रन्थधृतकात्यायन( कास्मृ० ५४३।पृ० ६८ )वचनञ्चेति ॥४॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयमैमासीयशिवमितदिनसम्बन्धिबुधवासरे मया प्रभुसमर्पितप्रश्नपत्रविचारपत्राभ्यां सहितेयं व्यवस्था दत्तेति ॥

श्रीर्जयतितराम्

श्रीवैद्यनाथमिश्रेण

———

(९३)—नं० ६७० सदर—

इ० सन १८३६ सालेर १९ मार्च मो० वा० सन १२४२ सालेर ८ चैत्र शनिवारेर श्रीयुत जार्ज्ज इष्टाकोएल साहेव विचाराद्ध्यक्षेर आधिपत्येर मोकाम कलिकातार सदर देओयानी आदालतेर मिछिलेर रुवकारि—

राणीजयदुर्गा आपीलाण्ट—
राणीकृष्णमणी रेष्पाडण्ट—

आपीलाण्टेर उकिल वर्ग सदासुखपण्डित ओ वंशीवदन मित्र ओ रामना(रा)यण उपस्थित हइल। रेष्पाडेण्ट एयानामनामा ओ एस्तहारनामा जारि हओनेओ स्वततः वा उकिलतः उपस्थित हइल ना। अद्य एइ मकर्द्दमा संख्यार शृङ्खलामते आमार आधिपत्ये समग्र हइया मिछिलेर कागजसकल पठित हइल। अवधारित हइल ये मोद्दाइया अर्थात् वादी उभयेर स्वीकृत विमलादास्यार स्वोपार्ज्जित सामुदाइक अर्द्धेक मौजे राणी ग्रामेर अर्द्धेक अर्थात उक्त मौजेर।) चारि आना अंश पाओनेर दावि उपस्थित करे। मोर्द्दालेहा अर्थात् प्रतिवादी राणीजयदुर्गा विमलादास्या कत्रिक विक्रयेर आपत्य उत्थापन करिलेक। जेलार सदर आमीन सेइ विक्रयके अवीरा स्त्रीर पक्ष हइते अशीद्ध विवेचना करिया वादीके डिक्री देन। ऐ डिक्री आपीले जेला रङ्गपुरेर जजसाहेवेर अग्रे अङ्गिकार पत्र विक्रीर न्याय साव्यस्थ ना हओनेर वोधे स्थिरतर रहिल, एवं विषय हस्तान्तर हओन सिद्ध वाक्येर विशेष हओनेर निमित्त आपील खास ग्राह्य हइल। अतएव उपरोक्त विक्रयपत्र साव्यस्थ कि असाव्यस्थ—अनुसन्धाने साक्षिगणेर उक्तिसकल दृष्टी करणेर पूर्व्वेइ उचित हइल जे आदालतेर पण्डितके जिज्ञाशा जाय जे। विधवा स्त्री, जाहार सन्तान सन्तत्यादि जीवद्दषाय नाइ, एवं स्वहस्ते विषय उपार्ज्जन करे, से विषय हस्तान्तर करणेर क्षमता राखे कि ना। हुकुम हइल जे एइ रुवकारिर नकल एइ आज्ञाय जे आदालतेर पण्डित लिखित प्रश्नेर उत्तर २ दुइ सप्ताहेर मध्ये दाखिल करेण आदालतेर पण्डितेर निकट प्रेरित हय—इति॥

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतबार्ज्जइष्टाकोएलसाहेवधर्म्माधिकरण-

लिखितेशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयमार्च्चमासीयाङ्केन्दुमितदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं तत्तदब्दीयतन्मासीयगजपक्षमितदिनसम्बन्धिचन्द्रवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते ॥–

मृतसन्तानया विधवया स्त्रिया यदि स्वयमेव धनमुपार्ज्जितं स्यात्तदा तस्या विधवायास्तद्धनहस्तान्तरकरणक्षमतास्त्येव–इति वङ्गदेशचलितमनुदायभागादिग्रन्थानुसारिणी व्यवस्थेति ।

अत्र प्रमाणम्—

*सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम् ।*

*विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥*—इति दायभागादि(पृ० ७६ )ग्रन्थधृतकात्यायन( कास्मृ० ९०६।पृ० ११० )वचनम् ॥१॥

*पतिमरणोत्तरं च विधवाया न कश्चित् स्वामी, किन्तु भरणादिकर्त्ता गुरुरेव श्वशुरादिः, अतस्तदानीमर्ज्जिते स्वातन्त्र्यमेव*—इति विवादभङ्गार्णव( २, पृ० ३९४ क )ग्रन्थलिखनञ्चेति ॥२॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयमैमासीयरसेन्दुमितदिनसम्बन्धिचन्द्रवासरे मया प्रभुसमर्पितविचारपत्रसहितेयं व्यवस्था दत्तेति ॥

श्रीर्ज्जयतितराम्

श्रीवैद्यनाथमिश्रेण

---

( ९४ ) सर्व्वशास्त्राध्यापक पण्डित आदालत देओानि सदर मोकाम कलिकाता सतचरित्रेषु—

प्रथम प्रश्नमिदम्—

यद्यपि कोन स्त्रीलोक किछु दिव्यादि राखिया निःसन्तान मृत्यु हय। ततपरे ताहार त्यज्य धनेर उपर ताहार स्वामीर पितामहेर सधवा एक कन्या एवं ऐ कन्यार एक दत्तक पुत्र एवं ऐ मृता स्त्रीर स्वामीर प्रपितामहेर भ्रातुपौत्र राधागोविन्दनामक एक जना आर ऐ मृता स्त्रीर स्वामीर प्रपितामहेर भ्रातुपुत्रवधु श्रीमतीलक्ष्मीप्रियानाम्नी एक जना एवं तस्य दत्तकपुत्र गोविन्दकीशोर

नामक दाविदार हय; तवे यथाशास्त्र ऐ सकल दाविदारानेर मध्ये कोन व्यक्ति ऐ मृतार त्यज्य धनाधिकारि हइवेक, एवं दत्तक पुत्रेर माता वर्त्तमान थाकिले दत्तक पुत्रके धन पौछिते पारे कि ना— एहार यथाशास्त्र उत्तर लिखिवा। परन्तु दुइ किता वंशावली-पत्रिर नकल तोमार ज्ञातार्थे प्रश्नपत्र सम्वलित पाठान जाइतेछे इति। १ माहे मार्च्च सन १८३६ इङ्गरेजी मतावक सन १२४२ वा० तारिख १९ माहे फाल्गुन ॥

प्रभुसमर्पितप्रश्नपत्रं विचारपत्रं वंशावलीपत्रद्वयं च यदीशवीशब्द-प्रतिपाद्यरसगुणगजेन्दुमिताब्दीयमार्च्चमासीयद्विपक्षमितदिनसम्बन्धिमङ्गल-वासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रभुसमर्पितप्रश्नलिखितवृत्तान्ते सति हरिश्चन्द्ररायत्यक्ततत्पत्नीसंक्रान्त-धने मृतायाः स्त्रियाः पत्युः पितामहस्य सधवाकन्याया दत्तकपुत्रस्यार्थान्मृतधनिहरिश्चन्द्ररायपितामहदौहित्रस्यैवाधिकारः—इति; एवं दत्तकपुत्रस्य मातरि विद्यमानायामपि दत्तकपुत्रस्यैवाधिकारः—इति वङ्गदेशचलितमनु-दायभागादिग्रन्थानुसारिणी व्यवस्थेति ॥

अत्र प्रमाणम्—

*पत्नी दुहितरश्चैव*—इत्यादि दायभागादिग्रन्थधृतयाज्ञवल्क्य-वचनम् ॥१॥

*पितामहप्रपितामहसन्ततेरपि दौहित्रान्तायाः पिण्डप्रत्यासत्तिक्रमेणाधिकारो बोद्धव्यः*—इति दायभागग्रन्थलिखनम् ॥२॥

*पितृव्यपौत्राभावे पितामहदौहित्रस्याधिकारः*—इति दायभागटीका-( पृ० २१८ )दायक्रमसंग्रह( पृ० ८ )प्रभृतिग्रन्थलिखनञ्चेति ॥३॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयजूनमासीयाङ्कमितदिनसम्बन्धिवृहस्पतिवासरे मया प्रभुसमर्पितप्रश्नपत्रविचारवंशावलीपत्राभ्याञ्च सहितेयं व्यवस्था दत्तेति ॥ —

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

———

(६५) यदि कश्चिन्निरपत्यो ब्राह्मणः स्वभार्य्यां समीपवर्त्तिनः सपिण्डांश्च त्यक्त्वा मृतस्तदा तत्समीपवर्त्तिनि सपिण्डे विद्यमाने लब्धपतिधना तत्पत्नो स्वभर्त्तुः स्थावरधनं पत्रकरणपूर्व्वकं कस्मैचिद्दत्तवती चेत्, तत्स्त्रीकृतं दानमप्रामाणिकम्।

स्त्रीकृतान्यप्रमाणानि कार्य्याण्याहुरनापदि।
विशेषतो गृहक्षेत्रदानाधमनविक्रयाः॥—इति विवादचन्द्रग्रन्थस्थकृतनिवृत्तिप्रकरणधृतार्षवचनादिति॥—

सही—कल्याणमिश्रपण्डित
आदालत दिमानी जिले तिरहुत वकलम
रामनाथमिश्र पण्डित।

शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा।
यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति।
जीवत्यर्द्धशरीरेऽर्थं कथमन्यः समाप्नुयात्॥
अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता।
स्त्रीकृतान्यप्रमाणानि कार्य्याण्याहुरनापदि॥

विशेषतो गृहक्षेत्रदानाधमनविक्रयाः॥—इति दायभागविवादचन्द्रस्थकात्यायनबृहस्पति(पृ० २११) वचनादिति॥—

सही—कल्याणमिश्र पण्डित आदालत दिवानी
जिले तिरहुत वकलम
रामनाथमिश्रपण्डित।

नं० ३५९ सदर—

इ० सन १८३६ सालेर १७ मे मोतावक सन १२४३ सालेर ५ ज्यैष्ठी मङ्गलवारेर प्रकाश्य मोकाम कलिकातार सदर देओयानि आदालतेर मिछिलेर रोवकारि उक्त आदालतेर हाकिम श्रीयुत जार्ज्ज इष्टाकोयेल साहेबेर नेसस्ते—

गम्भिरराय, ताहार मृत्युर पर विजयराय ओ गायरह—

आपीलाण्टान
मोछमात धनेश्वरी ओ गयेरह — रेष्पानडेण्टान

आपीलाण्टानेर उकिल वजरङ्गीलाल ओ रेष्पानडाण्टानेर उकिल मुनशी दादारवक्स हाजीर हइल। एइ मोकर्दमा अद्य तरतिव नम्बर मते आमार नेसस्ते रोवकार हइया मिछिलेर कागजात पठीत हइल। ताहार मध्ये ये जेला तिरोहतेर आदालतेर पण्डितेर दुइ व्यवस्था मोलाहेजा हइल। यदि स्यात् उक्त दुइ व्यवस्थार मध्ये रेजेष्टर साहेवेर सओयाल ओ जजसाहेवेर सओयालेर मध्ये विभिन्नतार प्रति दृष्टीते आमार निकट कोनो प्रभेद प्रकाश नाइ। किन्तु जे हेतुक प्रकाश आछे—जे एइ मकर्दमार खाश आपील लिखित व्यवस्थासकलेर लेहाजे मन्जुर हइयाछे, ए जन्य ए आदालतेर पण्डितके उक्त व्यवस्थासकलेर लिखित जओयावेर यथार्थता तिरहुतेर चलित शास्त्र अर्थात् मैथिल अनुसारे जिज्ञासा जन्य ताहा समर्पन उचित विवेचना हइया हुकुम हइल जे एइ रोवकारिर नकल मोकर्दमार नथिर ग्रन्थितो आसल दुइ व्यवस्था समेत एइ आदालतेर पण्डितेर निटक पाठान जाय। एइ हुकुम, ये उक्त पण्डित दुइ व्यवस्था दृष्टेर पर एइ विषयेर जओयाव जे लिखित व्यवस्थासकल तिरहुत जेलार चलित शास्त्र अनुसारे यथार्थ वटे कि ना—एक सप्ताह मेयाद मध्ये दाखिल करेन इति॥

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतजार्ज्जइष्टाकोएलसाहेवधर्म्माधिकरणलिखितेशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयमैमासीयमुनीन्दुमितदिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपरत्रमेवं तत्समर्पिततोरभुक्तिजिलाख्यावान्तरधर्म्माधिकरणनियुक्तपण्डितलिखितव्यवस्थाद्वयं च यत्तदब्दीयतन्मासीयगजपक्षमितदिनसम्बन्धिशनिवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते॥—

प्रभुसमर्पितव्यवस्थाद्वयोस्तात्पर्य्यार्थस्त्वयमेव—कस्यचिदनपत्यस्य मृतस्य ब्राह्मणस्य पत्न्याः स्वसंक्रान्तपतिस्थावरादिधनस्य पतिसपिण्डेषु विद्यमानेष्वन्यस्मै हस्तान्तरकरणे क्षमता नास्ति, किन्तु यावज्जीवं भोगाधिकार इति। तत्प्रभुसमर्पितव्यवस्थाद्वयोपरिलिखितप्रश्नद्वयलिखितवृत्तान्ते सति मिथिलादेशचलितशास्त्रानुसारेण यथार्थमेव भवति, प्रभुसमर्पितव्यवस्थाभ्यां तद्वयवस्थाद्वयोपरिलिखितप्रश्नाभ्यां चैतद्विवादे पत्न्याः स्वसंक्रान्तपतिस्थावरादिधनस्य हस्तान्तरकरणक्षमताबोधकशास्त्रीयावश्यकहेत्वनवगमादिति ॥—

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयजुनमासीयद्वाविंशतितमदिनसम्बन्धिबुधवासरे मया प्रभुसमर्पितविचारपत्राभ्यां व्यवस्थापत्राभ्यां च निवेदनपत्रेण च सहितेयं व्यवस्था दत्तेति ॥—

श्रीर्ज्जयतितराम्

श्रीवैद्यनाथमिश्रेण

---

( ९६ )—९३ ल० सदर—

इ० सन १८३६ सालेर ६ एफरेल मोतावक सन १२४२ सालेर २६ चैत्र तारिख वुधवारेर प्रकाश्य मोकाम कलिकातार सदर देओयाणी आदालतेर रोवकारि उक्त आदालतेर हाकिम श्रीयुत जार्ज्ज इष्टाकोयेल साहेवेर एजलागे—

रामनाथसिंह— आपीलाण्ट—

राजारूपसिंह ओ राधेकृष्ण— रेष्पाडेण्टान—

आपीलाण्टेर उकिल मुनशी दादारवक्स ओ रेष्पाडेण्टानेर उकिल मुनशी अलीउल्ला उपस्थित हइलो। एइ मोकर्द्दमा अद्य तरतिव नम्वर मते आमार नेसस्ते रोवकार हइया मिछिलेर कागजसकल विवेचनाय जाना गेलो जे मुद्दइआन अर्थात रेष्पाडेण्टान राजरूपसिंह ओ राधेकृष्णदे नओयान परगनार दत्तेट ओ गयरहे मौजाहायेर पर हक्-सफा सुरते दखल करणेर दाविते

विक्रेता धुरमनसिंह ओ खरिदार रामनाथसिंहेर नामे जेला साहाबादेर देओयाणी आदालते नालिस करिलेक। जेलार जज साहेवेर तजविजे आदालतेर मौलविर स्थाने फतओया अर्थात् व्यवस्था लइया सफा अनुसारे विरोधीय वस्तुर प्रति मुदाइआनेर दावि यथार्थ हओनेर विशय डिक्री करिलेन ओ सेइ डिक्री द्वितीय निष्पत्य स्थाने एलाका आजिमाबादेर प्रोविनशीयन कोर्टे वहाल करिल, जे वर्त्तमान आपीलाण्ट ताहाते नाराज हइया ए आदालते आपील खास उपस्थित करिलेक। सन १८३३ सालेर २३ जुलाइ तारिखेर रोवकारि मते एइ आदालतेर हाकिम रावट हालडन राटरि साहेवेर नेसस्त हइते मन्जुर हइलो। जे हेतुक प्रकाश जे आपील खास मञ्जुरिर कारण—ये जाहार उभय पक्ष हिन्दुजाति, से मकद्दमा तजविज हओया शरा अर्थात् जवनीय धर्म्मशास्त्रेर अधिकारिके जिज्ञास्यमते। अतएव अन्य विषयसकल तजविजेर पूर्व्वे आदालतेर पण्डितके ब्याओरा जिज्ञाशा उचित। यथा उभय पक्षेर उकिल प्रकाश करिलेक जे यदि जजसाहेवेर फयशालार लिखित सओ-यालसकलेर जओयाव वेहारदेशेर चलित शास्त्रानुसारे ए आदालतेर पण्डितेर स्थाने लओया जाय लभ्यजनक हइवेक। अतएव हुकुम हइलो जे एइ आदालतेर पण्डित निचेर लिखित सओयालसकलेर जओयाव दुइ सप्ताहेर मध्ये दाखिल करेण, ओ रोवकारिर नकल वाङ्गला तरजमार सहित आदालतेर पण्डितेर निकट प्रेरित हय ॥—

१ प्रथम सओयाल—

देओट तालुकेर हिस्यादार धूरमलसिंह विक्रेता, वावु रामनाथसिंह खरिदार, राजरूपसिंह ओ राधेकृष्णसिंह हक-सफा तलविर ओजरदार, आर मौराशी तालुक मजकुरार हिस्यादारान, एवं चतुर्थ पट्टी, जाहाते विक्रेता वेसरिक आछे, ताहारो हिस्या-दार राजरूपसिंह ओ राधेकृष्ण ओजरदारेर दाओट तालुकेर

४५

मध्ये अन्य एक मौजार खरिदार उक्त वावुरामनाथसिँह। यदि-स्यात् विक्रेता आपन अंश वावुरामनाथसिंहेर निकट विक्री करे, उपरेर लिखितेर प्रति विवेचनाय राजरूपसिंह ओ राधेकृष्णेर हक-सफा अर्शे कि ना ॥—

२ द्वितीय सओयाल—

धूरमलसिंह विक्रेता वावु रामनाथसिंह खरिदारके सन १२३५ फछलीर लेखा एक केता बयनामा मवलगे तिन सत टाकार क्रये दे(य), ओ वायनार तारिख हइते एक मासेर मध्ये कवाला लिखिया दिवार ओ तत्कालीन पानेर वाकि मवलगे एक हाजार पञ्चाश टाका लइवार एकरारे लिखिया देय। इति मध्ये राजरूप-सिंह ओ राधेकृष्ण एक मास गतो हओनेर पूर्व्वे अर्थात् सन १८२८ सालेर १९ मै तारिखे तिन सत टाका उपस्थित करिया तलवे लओया सुरत अर्थात् तत्परता चेष्टा करिलेक, फलितार्थं आदालते दाखिल करिलेक। ए प्रकार विषय एमत् आनामत हक-शफा रक्षा करणार्थे फलदायक हय कि ना ॥—

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतजार्ज्जइष्टाकोएलसाहेवधर्म्माधिकरण-लिखितेशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयापरेलमासीयविचारपत्रा-न्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयतन्मासीयरसेन्दुमितदिनसम्बन्धिशनिवा-सरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

प्रथमप्रश्नस्योत्तरम्—

प्रभुसमर्पितप्रथमप्रश्नलिखितविवेचनया धर्म्मशास्त्रानुसारेण राजरूप-सिंहराधेकृष्णयोर्हकशफाशब्दप्रतिपाद्यं भवितुं न शक्नोतीति ॥

अत्र प्रमाणम्—

*व्यवहारान् नृपः पश्येद्विद्वद्भिः ब्राह्मणैः सह ।*

*धर्म्मशास्त्रानुसारेण*—इत्यादि मिताक्षरादिग्रन्थधृतयाज्ञवल्क्य( २।१ ) वचनम् ॥१॥

यद्येकजाता बहवः पृथग्धर्म्माः पृथक्क्रियाः ।
पृथक्कर्म्मगुणोपेता न तत्कार्य्येषु सम्मताः ॥२॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्य्युर्यथेष्टं तत्सर्व्वमीशास्ते स्वधनस्य वै ॥ इति वीरमित्रोदयादि-ग्रन्थधृतनारदवचनद्वयम् ॥३॥—

द्वितीयप्रश्नस्योत्तरम्—

प्रभुसमर्पितद्वितीयप्रश्नलिखितवृत्तान्ते सति एतादृशमूल्यस्थापनं इकसफाशब्दप्रतिपाद्यस्य रक्षणार्थं धर्म्मशास्त्रानुसारेण फलदायकं न भवति—इति वेहारदेशचलितमनुमितात्तरावीरमित्रोदयादिग्रन्थानुसारिणी व्यवस्थेति ।

अत्र प्रमाणम्—

प्रथमप्रश्नोत्तरलिखितप्रमाणत्रयमेवेति ॥३॥—

यद्यपि महानिर्व्वाणतन्त्रग्रन्थे इकसफाशब्दप्रतिपाद्यविषये उपरि-लिखितव्यवस्थाया विरुद्धमपि लिखितमस्ति, किन्तु महानिर्व्वाणतन्त्रग्रन्थो धर्म्मशास्त्रान्तर्गतो न भवति। अत एव तद्ग्रन्थानुसारेण व्यवस्था न लिखिता इति निवेदनमिति ॥—

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयजुनमासीयद्वाविंशतितम-दिनसम्बन्धिबुधवासरे मया प्रभुसमर्पितविचारपत्रसहितेयं व्यवस्था दत्तेति ॥—

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

---

(९७)—लम्वर—११६

मोकाम कलिकातार सदर देओयानि आदालतेर पण्डित समीपे प्रश्न एइ –

| | |
|---|---|
| कालीकान्तवल | आपीलाण्ट |
| पार्व्वतीदास्या | रेष्पाडण्ट |

यदि कोन व्यक्ति तिन पुत्र ओ एक स्त्री राखिया मृत्यु हय, ओ ताहार स्त्री ओ पुत्र दिगेर अनैक्यताभाव अर्शे, तवे एतद्देशीय

चलित शास्त्रानुसारे ऐ मृत व्यक्तिर स्त्री पुत्रदिगेर समक्षे पतिर वित्तेर अंश पुत्रदिगेर समांस मते पाइते पारे कि ना। यदि पुत्रदिगेर समांसे वित्तांसि ना हय, तवे कि परिमाणे वित्तांसि हय—एहार उत्तर लिखिवेन इति। १८३६ ता-८ फेब्ररओरी मोतावेक वङ्गला सन १२४२ तारिख २७ माघ ॥—

## श्रीर्जयतितराम्

प्रभुसमर्पितप्रश्नपत्रं विचारपत्रं च यदीशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयमार्च्चमासीयद्विपक्षमितदिनसम्बन्धिमङ्गलवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

यदि कश्चिद्व्यक्तिविशेषस्त्रीन् पुत्रानेकां पत्नीं च विहाय मृतः स्यात्, अथ च मृतस्य पत्न्या सह मृतस्य पुत्राणामर्थान्मातृपुत्राणां मध्ये पुत्रकृतपितृधनविभागद्वारेणानैक्ये सति अर्थात् त्रिभिः पुत्रैर्म्मात्रे भागमदत्त्वा पितृधनं समांशेन विभज्यते, तदा मातापि पुत्रसमांशं ग्रहीतुमर्हति, पुत्रकृतपितृत्यक्तधनविभागोपक्रमं विनैव मात्रा स्वेच्छयैव विभागं कृत्वा पतित्यक्तधनांशयाचनेन अनैक्ये सति माता विद्यमानेषु पुत्रेषु पतित्यक्तधनांशं पुत्रांशं समांशानुसारेण प्राप्तुं नार्हति, किन्तु यावज्जीवं स्वपतिकुलोचितग्रासाच्छादनोपयुक्तधनावश्यकविधवाधर्म्माद्याचरणोपयुक्तधनस्य चाधिकारिणी भवति—इति वङ्गदेशचलितमनुदायभागादिग्रन्थानुसारिणी व्यवस्थेति ॥

अत्र प्रमाणम्—

*पितरि चोपरते सोदरभ्रातृभिर्विभागे क्रियमाणे मात्रे पुत्रसमांशो दातव्यः*—इतिदायभाग( पृ० ६७ )ग्रन्थलिखनम् ॥१॥

*भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्*
*नरकं पीडने चास्य तस्माद् यत्नेन तं भरेत्* ॥ इति दायभागादिग्रन्थधृतमनुवचनम् ॥२॥

*पिता माता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः ।*

*अभ्यागतोऽतिथिश्चैव पोष्यवर्ग उदाहृतः* ॥ इति दायभागटीका(पृ० ३४)धृतमनुवचनञ्चेति¹ ॥३॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयजुलाइमासीयगुणेन्दुमित-दिनसम्बन्धिबुधवासरे मया प्रभुसमर्पितप्रश्नपत्रविचारपत्राभ्यां इङ्गरेजीपत्राभ्यां च सहितेयं व्यवस्था दत्तेति ॥

श्रीर्जयतितराम्

श्रीवैद्यनाथमिश्रेण

---

(९८) नं० २०२ सन १८३३ ।—

मोकाम कलिकातार सदर देओयानी आदालतेर मिछिलेर रुवकारि उक्त आदालतेर हाकिम श्रीयुत जार्ज्ज इष्टाकोयेल साहेवेर नेसस्ते इंराजी सन १८३६ सालेर १६ आपरेल मोतावक वाङ्गला सन १२४३ सालेर ५ वैशाख शनिवार प्रकाश्य—

| | |
|---|---|
| शिवनारायणचौधुरि | आपीलाण्ट |
| राधाप्यारीदासी ओ गयरह | रेष्पाण्डेण्टान |
| राधामोहनमित्र | जेलार मोजाहेम |
| मधुसूदनदास | एइ आदालतेर छायेल |

आपीलाण्टेर उकिलवर्ग जेमेष कोलब्रोक सदरलेण्ड साहेव ओ सदासुखपण्डित ओ रेष्पाण्डेण्टानेर उकिल ताराचाँदवन्द्योपाध्याय ओ राधामोहनमित्रेर उकिल गौरहरिवन्द्योपाध्याय ओ मधुसूदनदासेर उकिल शिवनारायणचट्टोपाध्याय उपस्थित हइल। एइ मकद्दमा अपरिमित तारिखे आमार नेसस्ते रुवकार हइया मिछिलेर कागजसकल पठित हइल। वोध हइल जे मोद्दई आपीलाण्ट लाट राधानगर आपन खरिदा पत्तनिर हकियते

---

१. मनुस्मृतौ नोपलभ्यते।

দখল পাওনের দাবিতে বয়নামার লিখিত মূল্য ও তালুকের উপস্বত্ত্ব মবলেগ ৭০৫১ টাকার তায়দাদে রাধাপ্যারিদাসী ও কৃষ্ণদাসদত্ত্ব ও তিলকরামদত্ত্ব আসামীয়ানের নামে হুগলিজেলার দেওয়ানি আদালতে এই এজহারে নালিশ করে যে রামগোপালদত্ত্ব ওহার ভ্রাতৃগণ তিলকরামদত্ত্ব ও রঘুনাথদত্ত্বের সহিত অন্ন প্রথক হওনের পরে সন ১২২১ সালে আপন উপার্জ্জন হইতে নাট রাধানগর তালুক পত্তনী সুরতে খরিদ করিয়া দখিল ও কাবেজ হইয়া লোকান্তর হয়। তাহার মৃত্যুর পর তাহার বনিতা রাধাপ্যারীদাসী আপন স্বামীর জ্যেষ্ঠ ভ্রাতা তিলকরামদত্ত ও পোষ্য পুত্র ও দৌহিত্র কৃষ্ণরামদত্ত্বের সরবরাহকারির দ্বারা দখিলকার হইয়া সদর জমিদারের জমিদারি সেরেস্তায় আপন নামে দাখিল করাইয়া নাম জারির লিপি হাসিল করিয়া স্বামির ঋণ পরিশোধ ও মালগুজারির বাকি নিমিত্ত উক্ত তালুকের সামুদাইক হকুক সন ১২৩৮ সালের ২৩ ফাল্গুণ তারিখে মবলগে পাঁচ হাজার টাকা পনে ফরিয়াদির হস্তে বিক্রয় করিয়া, তাহার বয়নামা সাক্ষিগণের সাইদীতে ও রেজেষ্টরী নিশানীতে লিখিয়া দিয়া, খারিজ ও দাখিল করাইয়া ফরিয়াদিকে ও দখীলকার করার পরে উক্তা রাধাপ্যারি অন্য প্রতিবাদিগণের কুপরামর্শে ফরিয়াদির হস্তে বিক্রয় করা অস্বীকার সম্বলিত ফৌজদারিতে দরখাস্ত গোজরায় ও উক্তা রাধাপ্যারী ও তিলকরামদত্ত্ব ও রঘুনাথদত্ত্বের পত্তনী দাবি সুরতে ও জগমোহনমিশ্রের ওয়ারিশ রাধামোহনমিশ্রের উক্ত নাটের চারি আনা রকমে দরপত্তনীদারি পদে দখল থাকনের হুকুম ও লম্বরি নালিসের অনুমতি ফরিয়াদির প্রতি ছাদের করায়। আসামীয়ান তাহার জওয়াবে পষ্ট অস্বীকারী হইয়া বিরোধীয় তালুক যে রাধাপ্যারীর স্বামী রামগোপালদত্ত্বের সোপার্জ্জিত ও তাহার ভ্রাতৃবর্গের সহিত প্রথকান্নে থাকা মুনকীর, বরং এ কাল পর্য্যন্ত তাহারদিগের তাবত কারবার সাধারণে ও এজমালীতে থাকা প্রকাশ

करे, एवं फरियादिर दरपेश करा कवाला जाल ओ कित्रिम करार दिया शास्त्र मते उक्ता राधाप्यारिर कन्या ओ दौहित्र वर्त्तमाने दान ओ विक्रय अशीध्य बयान करे। जेलार जज-साहेब जुरिरदिगेर राय, ए विषयेर विशेष तहकीकाते जे विरोधीय तालुक रामगोपाल दर्त्तेर स्वोपार्ज्जित कि तिन सरिकेर अंश आछे, लइया आपन रायेर ऐक्यताय तदानुसारे सन १२३४ सालेर ३ मार्च्चे तारिखे लिखित फयसलार कारणसकले फरियादिर दावी डिषमिष करिलेन। एइ प्रकारे जे फरियादी, यदि राधाप्यारिदास्यार हिस्यार प्रति कोन दावि राखे. प्रथक नालिश उत्थापन करणेर क्षमता आछे। मोदइ ताहाते नाराज हइया एइ आदालते आपिल करियाछे—जे हेतुक आमार निकट राधामोहनमिश्रेर मोजाहेमो सओयालेर प्रति, जे आपनाके विरोधीय तालुकेर चतुर्थांशेर दरपत्तर्नीदार करार देय, एइ विवेचनाय जे से ए मकर्द्दमार आसामियानेर मध्ये नहे। केवल दरपत्तर्नीदार मात्र, कोन हुकुम छादेर करा आविश्वक नाइ, ओ मधुसूदनदासेर अर्पित दरखास्तेर प्रति ओ जे से आपन खरिद करिया ए आदालते दाखिल करियाछे, कोन हुकुम उपयुक्त वोध हय ना। जखन ए मकर्द्दमा निष्पत्य हइवेक एवं विरोधीय वस्तु, आपीलाण्ट किम्वा रेष्पाण्डेण्ट, जाहार हक, हइवेक, ताहार पर दावि उपस्थित करा व्यतिरेके उहार दखलेर हुकुम हइते पारे ना। अतएव ताहा परित्याग करिया ए मकर्द्दमार आसल अवस्थार प्रति मोहनलालखाँ आपीलाण्टेर मकर्द्दमार प्रसङ्ग जाहा राणी सिरोमणी रेष्पाण्डेण्टेर नामे सन १८१२ सालेर ३१ आगष्ट तारिखे एइ आदालत हइते निष्पत्य पाइयाछे। एवं आमार अनुमाने ताहार लिखित हेतुसकल जावदीय उत्तराधिकारी जाहारा हस्तान्तरेर समय जीवतमान थाके ताहारदिगेर सम्मति ओ अनुमति भिन्य स्वामीर त्याग्यर्य सामुदाइक विषय हस्तान्तर करणेर विषये अशीद्ध वोध हय। अनुष्ठान करा गेल। ताहाते

आपीलएण्टेर उकिल कहिलेक जे आमि अनुमान करि से मकर्द्दमा दान विषयक, ताहाते पण्डितवर्गेर लिखित जे व्यवस्था ताहा एइ विक्री विषयक, मकर्द्दमार सहित कोन सम्पर्क नाइ। ए जन्य ए विषय शास्त्रवेत्ताके जिज्ञाशा करा उचित बोध हइल। अर्थात् एइ आदालतेर पण्डितके जिज्ञाशा करा जाय जे से उपरेर लिखित फयसला दृष्टी करणेर परे सकल उत्तराधिकारि, जाहारा विक्रयपत्र लेखा हइवार समय जीवद्दशाय छिल, ताहारदिगेर अनुमति भिन्न टाकार परिवर्त्ते स्वामीर त्याज्यं सामुदाइक भूम्यादि विक्रयेर प्रति विधवा स्त्रीर क्षमता विषये शास्त्रेर आज्ञा वयान करे, ओ ए विषये स्वामिर ऋण थाकुक वा ना थाकुक कोन प्रभेद आछे कि ना; एवं यदि स्यात् स्वामीर त्याज्यं सामुदाइक भूम्यादि विक्रय करिते ना पारे, तवे तन्मध्ये कि परिमान विक्रय करिवार क्षमता राखे—पष्ट करे। अतएव हुकुम हइल जे मकर्द्दमा अद्य मोलतवी थाके, एवं उपरेर लिखित विषयसकलेर जिज्ञाशा करेण। एइ रुवकारिर नकल एइ आदालतेर पण्डितेर निकट प्रेरित हय इति॥

## श्रीर्ज्जयतितराम्

एतद्धर्म्माधिकरणाधिपतिश्रीयुतजार्ज्जइष्टाकोएलसाहेवधर्म्माधिकरण—लिखितेशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयापरेलमासीयरसेन्दुमित-दिवसीयविचारपत्रान्तर्गतप्रश्नप्रतिरूपपत्रं यत्तदब्दीयमेइमासीयशिवमित-दिनसम्बन्धिबुधवासरे तत्समर्पितरसगुणगजेन्दुमिताब्दीयजुलाइमासीयमुनि-मितदिवसीयविचारपत्रान्तरञ्च यत्तदब्दीयतन्मासीयगुणेन्दुमितदिनसम्बन्धि-बुधवासरे च मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेण प्रभु-समर्पितविचारपत्रलिखितजयपत्रावलोकनेन चोत्तरं लिख्यते—

विक्रयपत्रलिखनकालीनविद्यमानोत्तराधिकारिसमुदायानुमतिमन्तरेण राजतमुद्राविनिमये पत्न्याः स्वसंक्रान्तसमस्तपतिस्थावरादिधनस्य विक्रयकरण-

क्षमता शास्त्रीयावश्यककार्य्यार्थमर्थात् पतिकृतर्णपरिशोधनार्थं पत्यौर्द्ध्वदैहिकक्रियाद्यर्थं पतिकुटुम्बभरणार्थं स्वभरणपोषणाद्यर्थं चास्त्येव। पत्नी शास्त्रीयावश्यककार्य्यार्थव्यतिरिक्तस्वेच्छया स्वमरणानन्तरं विद्यमानपत्युत्तराधिकारिस्वत्वनाशकविक्रयकरणक्षमतां न रक्षतीत्येवात्र विशेषः। एवञ्च सति पतित्यक्तस्थावरादिधनान्तर्गतेन यावता धनेन पतिकृतर्णपरिशोधनस्योपरिलिखितावश्यककार्य्यान्तरस्य वा निर्व्वाहो भवति विधवायास्तत्परिमितपतित्यक्तस्थावरादिधनस्य विक्रयकरणक्षमतायाः शास्त्रीयत्वमेव। यदि च पतित्यक्तस्थावरादिसमुदायधनस्य विक्रयमन्तरेण पत्नीकर्त्तव्यशास्त्रीयावश्यककार्य्यजातस्य तदन्तर्गतस्य कस्यचिदपि कार्य्यस्य वा निर्व्वाहो भवितुं न शक्यते, तदा तत्तत्कार्य्यस्य निर्व्वाहार्थं पत्न्याः पतित्यक्तस्थावरादिसमुदायधनस्य विक्रयकरणक्षमतायाः शास्त्रीयत्वमेव—इति वङ्गदेशचलितदायभागादिग्रन्थानुसारिणी व्यवस्थेति ॥

अत्र प्रमाणम्—

ऋक्थग्राही ऋणं दाप्यः—इति विवादभङ्गार्णवादिग्रन्थधृतयाज्ञवल्क्यवचनम् ॥१॥

मर्त्तुकामेन वा भर्त्त्रा उक्ता देयमृणं त्वया।
अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया॥ इति विवादार्णवसेतुविवादभङ्गार्णवादिग्रन्थधृतकात्यायनवचनम् ॥२॥

भर्त्त्रा जीवन् यथा यस्य पोषणादिकं यद्यद्वा कर्म्म करोति मृतभर्त्तृकापि स्वशक्त्यनुसारेण तथैव तस्य पोषणं तच्च कर्म्म कुर्व्वीत—इति विवादभङ्गार्णवग्रन्थलिखनम् ॥३॥

भर्त्तुरौर्द्ध्वदैहिकक्रियाद्यर्थं दानादिकमप्यनुमतमिते। वर्त्तनाशक्ताबाधानमप्यनुमतम्। तत्राप्यशक्तौ विक्रयणमपि च—इति दायभागग्रन्थलिखनञ्चेति ॥४॥

ईशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयजुलाइमासीयइन्दुपक्षमित-

दिनसम्बन्धिगुरुवासरे मया प्रभुसमर्पितविचारपत्राभ्यां सहितेयं व्यवस्था दत्तेति ॥—

श्रीर्ज्जयतितराम्
श्रीवैद्यनाथमिश्रेण

---

## श्रीर्ज्जयतितराम्

(६६) एतद्धर्म्माधिकरणाधिपतिश्रीयुतजार्ज्जइष्टाकोएलसाहेवधर्म्माधिकरणलिखितेशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयजुनमासीयगुणपक्षमितदिवसीयविचारपत्रान्तर्गतप्रश्नपत्रं तत्समर्पितैतद्धर्म्माधिकरणीयैतद्विवादविषयनिविष्टव्यवस्थापत्रं तीरभुक्तिजिलाख्यधर्म्माधिकरणीयव्यवस्थात्रयं च यत्तदब्दीयतन्मासीयगजपक्षमितदिनसम्बन्धिमङ्गलवासरे मया प्राप्तं तदवलोक्य यादृशबोधो जातस्तदनुसारेणोत्तरं लिख्यते—

पूर्व्वसमर्पितव्यवस्थाद्वयमीशवीशब्दप्रतिपाद्याङ्कपक्षगजेन्दुमिताब्दीयजुनमासीयदिङ्मितदिनलिखिततीरभुक्तिजिलाख्यावान्तरधर्म्माधिकरणाधिपतिजजपदाभिषिक्तसाहेवाज्ञप्तप्रश्नोत्तरव्यवस्था च। एतासु ति(सृ)षु व्यवस्थासु तज्जिलाख्यधर्म्माधिकरणाधिपतिजजपदाभिषिक्तसाहेवाज्ञप्तप्रश्नोत्तरव्यवस्था मिथिलादेशचलितशास्त्रानुसारिणी न भवति, पत्नीकृतपतित्यक्तस्थावरादिधनविषयकदानसिद्धिसम्पादकशास्त्रीयावश्यकहेतोस्तद्व्यवस्थापत्रलिखितप्रश्नतद्व्यवस्थाभ्यामप्राप्तत्वात्। पूर्व्वसमर्पितव्यवस्थाद्वयं चार्थादीशवीशब्दप्रतिपाद्याङ्केन्दुगजेन्दुमिताब्दीयजुनमासीयशिववक्त्रेन्दुमितदिवसीयतीरभुक्तिजिलाख्यधर्म्माधिकरणाधिपतिराजिस्तरपदाभिषिक्तसाहेवाज्ञप्तप्रश्नोत्तरव्यवस्था तदब्दीयतन्मासीयेषुपक्षमितदिनलिखिततत्प्रभुकृतप्रश्नोत्तरव्यवस्था च तत्तद्व्यवस्थापत्रलिखितप्रश्नद्वयलिखितावस्थायां मिथिलादेशचलितशास्त्रानुसारिणी भवति इत्येतद्विषयिणी व्यवस्था चैतदब्दीयजुनमासीयद्विपक्षमितदिनसम्बन्धिबुधवासरे दत्तास्तीति ॥

इशवीशब्दप्रतिपाद्यरसगुणगजेन्दुमिताब्दीयजुलाइमासीयमुनिपक्षमित-

दिनसम्बन्धिबुधवासरे मया प्रभुसंमर्पितविचारपत्रेण चतुर्भिर्व्यवस्थापत्रैः सहितेयं व्यवस्था दत्तेति ॥

श्रीर्ज्जयतितराम्

श्रीवैद्यनाथमिश्रेण

अत्र प्रमाणम्—

*पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत् ।*

*स्वामी सतापि लेख्येन पुनस्तान्न समाप्नुयात्* ॥ इति वृहस्पति( पृ० ७५ )वचनादिति—

सही -रामनाथमिश्र, पण्डित अदालत दिवानी जिले—तिरहुत ॥

---

श्रीश्रीदुर्गा

(१००) – लं० ५६४ –

मोतफरका सन १८३६ इ०—

रोवकारि मिछिल आदालत देओनि सदर मोकाम कलिकाता श्रीयुत डेविड इशमितसाहेव कायेम-मोकाम हाकिम आदालय मजकुरार वैठके। तारिख १८ जून सन १८३६ इ० मोतावक ६ आषाढ सन १२४३ वाङ्गला रोज शनिवार ॥—

मोछमात रूकमन— शाएला—

साएलार उकिल तारकचन्द्रराय हाजिर हइलो, गत रोजेर हुकुमानुसारे जिला भागलपुरेर जजसाहेवेर गत २८ माइ माहार लिखित रोवकारि ओ रिटरण जाहा एइ आदालतेर हाल सनेर २४ मार्च्च माहार लिखित रोवकारिर जवावे एइ मकद्दमार कागजात ओ ताहार इंजेरि तरजमा सम्वलित पौछियाछिल, अद्य साएलार सओाल ओ गयरह कागजात सहित उपस्थित हइया विवेचना हइल। जे हेतुक साएलार सओाल प्रति नातक

